संस्करण : अप्रेल २०१६, संवत् २०७३

मूल्य : २०० रुपये मात्र

मुद्रक एवं प्रकाशक:
खेमराज श्रीकृष्णदास,™
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
मुंबई - ४०० ००४.



Printers & Publishers :
Khemraj Shrikrishnadass,
Prop: Shri Venkateshwar Press,
Khemraj Shrikrishnadass Marg, 7th Khetwadi,
Mumbai - 400 004.

Web Site : http://www.Khe-shri.com
Email : khemraj@vsnl.com

Printed by Sanjay Bajaj For M/s. Khemraj Shrikrishnadass, Proprietors Shri Venkateshwar Press, Mumbai - 400 004,
at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune 411 013.

" कर्मठाचार्य स्व० पंडित श्रीचतुर्थीलालजी गौड द्वादशमहानिबन्धकर्ता " रतनगढ ( राजस्थान )



( ग्रन्थकर्ता के पिता एवं ज्येष्ठ भ्राता )

जन्म-आश्विन कृष्णा ४ सं० १९२४ ] [ मृत्यु-कार्तिक कृष्णा ६ सं० १९८१

# प्रस्तावना.



सर्व सज्जन महाशयोंको विदित होवे कि व्रतोपयोगी "व्रतराज", "व्रतार्क", "व्रतोद्यापनकौमुदी", आदि बहुतसे प्राचीन दाक्षिणात्य ऋग्वेदी ग्रंथ छपे हैं परंच उनमें साङ्गोपाङ्ग उद्यापनके प्रयोग नहीं होनेसे भूदेवोंका कार्य पूर्णतया नहीं होता है, कर्मके समय "हवनपद्धति", "कात्यायनशांति" आदिपुस्तक लेनी पडती हैं और तत्तद् व्रतके विधान उनमें न होनेसे यथार्थ काम नहीं हो सकता है, अत एव भूदेवोंके सुखार्थ और यजमानोंके कर्मपूर्तिके अर्थ और परमेश्वर की प्राप्तिके लिये यह "व्रतोद्यापनप्रकाश" नामक नूतनग्रंथ समंत्रक गणेशपूजनादि समाप्तिपर्यंत अनेक प्रयोगोंको करके सुशोभित संग्रह किया है और इस ग्रंथमें हमारे गौडसांप्रदायके तथा देशाचाररीतिके अनुसार अच्छेअच्छे प्रयोग रक्खे हैं। आजतक किसी ग्रंथकर्ताने नहीं रक्खे जैसे "गणगौरीव्रतोद्यापन" ' सत्यनारायणव्रतोद्यापन" इत्यादि बहुतसे व्रतोंके उद्यापन प्रचलित देशरीत्यनुसार प्राचीन ग्रंथोंके प्रमाणपूर्वक लिखे हैं और यह ग्रंथ हमारे द्वादश महानिबंधोंके अंतर्गत आठवीं ८ संख्याका है सो हमने इसको अपने प्रीतिपात्र सेठ खेमराज श्रीकृष्णदासजीको सर्वाधिकार सहित समर्पित कर दिया है सो उन्होंने अपने "श्रीवेङ्कटेश्वर" मुद्रणयंत्रालय बम्बईमें शास्त्री द्वारा शुद्ध कराय मुद्रित कर प्रकाशित किया है। आशा है कि कर्मठ सज्जनगण इसके ग्रहण और कर्मानुष्ठानसे हमारेसे स्वयं लाभ उठावेंगे और हमारे तथा प्रकाशकके परिश्रमको सफल करेंगे।

आपका प्रमी--पंडित श्री चतुर्थीलाल गौड कर्मठ,
मु० रतनगढ, जि० श्री बिकानेर, (राजपूताना)

# अथ व्रतोद्यापनप्रकाशस्थविषयाणां सूचीपत्रम्

ग्रंथसमाप्तिः ।

इति व्रतोद्यापनप्रकाशस्थविषयाणां सूची ।

(एकलिंगतोभद्रंदेवीमंत्रानुष्ठानयोग्यंगौरीतिलकमंडलमिदम्)



॥ अथाऽष्टादशरेखात्मकंचतुर्लिंगतोभद्रम् ॥



॥ सर्वव्रतोद्यापनोपयोगिसर्वतोभद्रमण्डलमिदम् ॥



। रुद्रयामलोक्तं चतुस्त्रिंशद्रेखात्मकं द्वादशलिंगतोभद्रमिदम् ॥



॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीशंकराय नमः ॥ अथ व्रतोद्यापनप्रकाश प्रारंभः ॥ वंदे महेश्वरं साम्बं सगणं भक्तवत्सलम् ॥ श्रीहरिं च गणाधीशं तपनं पितरौ तथा ॥ १ ॥ जयदेवं श्रीधरमथ, वासुदेवहरनंदविष्णुमुखान् ॥ एतान्गुर्वाचार्यान्, वृद्धाञ्शिष्टान्पुनःपुनर्नत्वा ॥ २ ॥ कातीयपारस्कर–सूत्रकदंबं विलोक्य गृह्योक्तम् ॥ अन्यदपि व्रतिहेतोः, कुर्वे ग्रंथं यथामति वै ॥ ३ ॥ निबंधाः शतशोऽस्माकं गौडानां सन्ति प्राक्तना ॥ तथापि भूमिदेवानां प्रीतिदोयं भविष्यति ॥ ४ ॥ ग्रन्थेस्मिन्बहुसाहस्रे चातुर्थीलालभास्करे ॥ निबंधाः सप्त प्रोक्ताः प्रागष्टमोयं निरूप्यते ॥ ५ ॥ तत्र तावदुद्यापनावश्यकता हेमाद्रौ नंदीपुराणे । कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ॥ उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् ॥ १ ॥ यत्र चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ॥ वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते ॥ २ ॥ गां चैव कांचनं दद्याद्व्रतस्य परिपूर्त्तये । गवां मौल्यं च निष्कः स्यात्तदर्द्धं पादमेव च ॥ आदौ मध्ये तथा चान्ते व्रतस्योद्यापनं चरेत् ॥ ३ ॥ अथ व्रतोद्यापने वर्ज्यकालमाह हेमाद्रौ गार्ग्यः ॥ अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ॥ उद्यापनमुपारंभं व्रतानां नैव कारयेत् ॥ १ ॥

( ज्योतिर्निबंधेपि ) अस्ते शुक्रेज्ययोर्बाल्ये वार्द्धके सिंहगे गुरौ ॥ त्रयोदशदिने पक्षे मासे न्यूनेऽधिके त्यजेत् ॥ २ ॥ केजिद्वक्रेऽतिचारेपि नीचराशि १० गते गुरौ ॥ धनुर्मीनगते सूर्ये गुरुणा संयुतेऽपि च ॥ ३ ॥ बाले वृद्धे च संध्यंशे त्रतुः ४ पंच ५ त्रि ३ वासरान् ॥ जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् ॥ ४ ॥ ( हेमाद्रौ सत्यव्रतः ) उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् ॥ सा खंडा न व्रतानां स्यादारंभश्च समापनमिति ॥ ( तद्व्यतिरिक्तायामखंडायां प्रारंभश्च समापनम् ॥ रविर्या तिथिं समुदेति अस्तं याति च सा संपूर्णा तत्तद्व्रतोक्तकालव्यापिनी ग्राह्या वा ) ॥ व्यतीपातादिनिषिद्धयोगभद्रादुष्टवासरादिरहितासु चंद्रताराादिबलान्वितासु स्वदैवत्यासु निषिद्धास्वपि तिथिषु च व्रतारंभसमाप्तीकार्ये ॥ अथ सर्वव्रतोद्यापनोपयोगिप्रयोगः ॥ तत्र तावद्व्रतोद्यानं चिकीर्षुः पूर्वदिने हविष्यान्नेन एकभक्तव्रतं विधाय तत्तत्कल्पोक्तनियमवान् द्वितीयेऽह्नि प्रातरुत्थाय नद्यादौ भस्मगोमयमृत्तिकास्नानपुरःसरं यथाविधि स्नात्वा देवर्षिपितॄन्संतर्प्य धौतवाससी परिधाय तिलकादि धृत्वा शरीरशुद्ध्यर्थं पंचगव्यं प्राश्य संध्यादिनित्यावश्यकं समापयेत् । ततः सुमुहूर्ते सपुत्रः सपत्नीकः[1]

१ शांतिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु । वामे चोपविशेत्पत्नी व्याघ्रस्य वचनं यथा ॥ १ ॥

शुभासने प्राङ्मुख उपविश्य स्ववामे पत्नीं चोपवेश्य सुवर्णादिपवित्रे धृत्वा द्विराचम्य प्राणानायम्य शांतिपाठं पठित्वा लक्ष्मीनारायणादिदेवान्प्रणमेत् ॥ अथ शान्तिपाठः ॥ ॐ आनोभद्राः क्रतवोयन्तु व्विश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतान्देवाना ꣩ रातिरभिनोनिवर्तताम् ॥ देवाना ꣩ सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्प्रतिरंतुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ २ ॥ अर्य्यमणम्वरुणꣳ सोममश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतो मयो भुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतः पृश्निमातरः शुभंयावानोव्विदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोव्विश्वेदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ꣩ सस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदे

वायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्र पितरोभवंतिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदिति
र्द्यौरदितिरन्तरिक्षमदितिर्म्माताऽसपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदिति
र्ज्जनित्त्वम् ॥ १० ॥ तम्पत्नीभिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्य
लोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः ॥ ११ ॥ आयुष्यँव्वर्चस्यर्ठरायस्पोषमौद्भिदम् ॥ इदर्ठ हिरण्यं
वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १२ ॥ द्यौः शांतिरन्तरिक्षर्ठ शांतिः पृथिवीशांतिरापः शांति
रोषधयः शांतिः ॥ व्वनस्पतयः शांतिर्विश्वेदेवाः शांतिर्ब्रह्मशांतिः सर्व्वर्ठशांतिः शांतिरेवशांतिः
सामाशांतिरेधि ॥ १३ ॥ यतोयतः समीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः
॥ १४ ॥ सुशांतिर्भवतु ॥ ॐ श्रीमहागणाधिपतये नमः ॥ ॐ लक्ष्मीनारायणाभ्यां नमः ॥
ॐ उमामहेश्वराभ्यां नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥ ॐ शचीपुरंदराभ्यां नमः ॥
ॐ मातृपितृचरणकमलेभ्यो नमः ॥ ॐ कुलदेवताभ्यो नमः ॐ इष्टदेवताभ्यो नमः ॥ ॐ ग्राम
देवताभ्यो नमः ॥ ॐ स्थानदेवताभ्यो नमः ॥ ॐ वास्तुदेवताभ्यो नमः ॥ ॐ सर्वेभ्यो देवेभ्यो
नमः ॥ ॐ पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ ॐ सुमुखश्चैकदंतश्च कपिलोगजकर्णकः ॥ लंबोदरश्च

विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि
यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामेसंकटे चैव विघ्नस्तस्य न जाय
ते ॥ ३ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ४ ॥ सर्वम
ङ्गलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोस्तुते ॥ ५ ॥ विनायकं गुरुं
भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ ६ ॥ वक्रतुंड महाकाय
सूर्यकोटिसमप्रभ ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ७ ॥ इति प्रणम्य ॥ संकल्पं कुर्यात् ॥
अथ संकल्पः ॥ ताम्रपात्रे गंधाक्षतपुष्पाणि यवजलकुशांश्चादाय । ॐ विष्णुर्विष्णुर्विष्णुः ३ ॐ
तत्सद्ब्रह्मश्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणो द्वितीये परार्द्धे एकप
ञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथंतरादिद्वात्रिंश
त्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायंभुवादिमन्वंतराणां मध्ये सप्तमे वैवस्वतमन्वंतरे कृत
त्रेताद्वापरकलिसंज्ञानां चतुर्णां युगानां मध्ये वर्त्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे
तथा पंचाशत्कोटियोजनविस्तीर्णभूमण्डलान्तर्गतसप्तद्वीपमध्यवर्तिनि जंबूद्वीपे तत्रापि नवखण्डा

नां मध्ये नवसहस्रयोजनविस्तीर्णे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्तान्तर्गतब्रह्मा
वर्ते वा अमुकदेशे वा अमुकक्षेत्रे श्रीगङ्गायमुनयोर्महानद्योरमुकदिग्भागे नर्मदाया अमुकप्रदेशे श्रीम
न्नृपविक्रमादित्यराज्यादमुकसंख्यापरिमिते प्रवर्तमानवत्सरे प्रभवादिषष्टिसंवत्सराणां मध्येऽमुकाना
नाम्नि संवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथावमुकवासरे अमुकनक्षत्रे
अमुकयोगे अमुककरणे अमुकराशिस्थे चन्द्रे अमुकराशिस्थे सूर्य्ये अमुकराशिस्थिते देवगुरौ शेषे
षु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ देवब्राह्मणानां
सन्निधौ अमुकगोत्रोऽमुकप्रवरोऽमुकशर्मा ममात्मनः श्रुतिस्मृतिपुराणोक्तफलावाप्तये अखिलपाप
क्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थममुककामनया वा मया
पूर्वाचरितममुकव्रतं तत्संपूर्णफलावाप्तये अमुकव्रतोद्यापनाख्यं कर्म करिष्ये ( पित्रादीनां निमित्तकं
चेत्तर्हि तेषामूहः कार्य्यः ) तदंगतया विहितं गणेशपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदी
श्राद्धमाचार्यादिवरणं च करिष्ये । इति संकल्प्य स्ववामे । कर्मार्थगंगाजलपूरितताम्रकलशार्चनम् ॥
ॐ तत्त्वायामिब्रह्मणाꣳवन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशꣳसꣳस

मानऽआयुःप्रमोषीः १ अस्मिन्कलशे ॐ वरुण इहागच्छेह तिष्ठ । इत्यावाह्य । ॐ अपांपतिवरुणाय नमः । इतिगंधाक्षतपुष्पैः संपूज्य । कलशस्य मुखे विष्णुरित्यभिमंत्र्य । ॐ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि जलेस्मिन्सन्निधिं कुरु ॥ १ ॥ इति कलशे तीर्थान्यावाह्य ॐ गंगादितीर्थेभ्यो नमः । इति गंधादिभिः संपूज्य । देवदानवसंवादे इति प्रार्थयेत् ॥ ततो दूर्वाभिः कलशोदकेन संभारान्स्वात्मानं च । ॐ अपवित्रः पवित्रो वा० ॐ विष्णुः ३ पुनात्विति संप्रोक्ष्य । दीपपूजनं कुर्यात् ॥ भो दीप त्वंब्रह्मरूप अन्धकारनिवारक ॥ इमां मया कृतां पूजां गृह्णंस्तेजः प्रवर्धय ॥ १ ॥ दीपाय नमः । इति गंधाक्षतपुष्पैः पूजयेत् ॥ अथ गणपतिपूजनम् ॥ तत्रादौ ध्यानम् ॥ श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः क्षीराब्धौ रत्नदीपैः सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिविशदं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ ॐ भूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणपतये नमः ध्यायामि इति ध्यानम् ॥ १ ॥ पुष्पाण्यादाय । हेरंब त्वमेह्येहि अंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धिपते त्र्यक्षलक्षलाभपितुः पितः ॥ १ ॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः

पाशाङ्कुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थे रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां क्रतुं
च रक्ष मे ॥ ३ ॥ ॐगणानान्त्वागणपतिठँहवामहेप्रियाणांत्वाप्रियपतिठँहवामहेनिधीनान्त्वानि
धिपतिठँहवामहेव्वसोमम ॥ जाहमजानिगर्भधमात्वमजासिगर्भधम् ॥ ॐ भूर्भुवःस्व सिद्धिबुद्धि
सहित महागणाधिपतये नमः ॥ गणपतिमावाहयामि स्थापयामि ॥ इत्यावाहनम् ॥ २ ॥ ॐ रम्यं
सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ॥ आसनं च मया दत्तं गृहाण गणनायक ॥ ॐ भूर्भुवःस्वः
सिद्धिबुद्धिसहितमहागणाधिपतये नमः आसनं समर्पयामि ॥ ३ ॥ इत्यासनम् ॥ ॐ उष्णोदकं निर्मलं
च सर्वसौगंध्यसंयुतम् ॥ पादप्रक्षालनार्थाय दत्तं मे प्रतिगृह्यताम् ॥ ॐ भू० महागणाधिपतये नमः
पाद्यं समर्पयामि इति पाद्यम् ॥ ४ ॥ ( एवं सर्वत्र ज्ञेयम् ) ॐ ताम्रपात्रे स्थितं तोयं गंधपुष्पफलान्वि
तम् ॥ सहिरण्यं ददाम्यर्घं गृहाण गणनायक ॥ इत्यर्घम् ॥ ५ ॥ सर्वतीर्थसमायुक्तं सुगंधि निर्म
लं जलम् ॥ आचमनार्थं मया दत्तं गृहाण परमेश्वर ॥ इत्याचमनम् ॥ ६ ॥ कावेरी नर्मदा वेणी
तुंगभद्रा सरस्वती ॥ गंगा च यमुनाऽऽसांवाः स्नानार्थं प्रतिगृह्यताम् ॥ इतिस्नानम् ॥ ७ ॥ पयो
दधि घृतं चैव मधु च शर्करायुतम् ॥ पंचामृतं मयानीत स्नानार्थं प्रतिगृह्यताम् ॥ इति पंचा

मृतस्नानम् ॥ ८ ॥ पुनः शुद्धोदकस्नानं समर्पयामि ॥ ॐ सर्वभूषाधिके सौम्ये लोक लज्जानिवारणे ॥ मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ इतिवस्त्रयुग्मम् ॥ ९ ॥ ॐ नवभि स्तंतुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं मया दत्तं गृहाण परमेश्वर ॥ इतियज्ञोपवीतम् ॥ १० ॥ पुनराचमनं च ॥ ॐ श्रीखण्डं चंदनं दिव्यं केशरादिसमन्वितम् ॥ विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्य ताम् ॥ इति चंदनम् ॥ ११ ॥ ॐ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ इत्यक्षतान् ॥ १२ ॥ ॐ सुमाल्यानि सुगंधीनि मालत्यादीनि वै प्रभो ॥ मयाहृ तानि पूजार्थं पुष्पाणिप्रतिगृह्यताम् ॥ इति पुष्पाणि ॥ १३ ॥ ॐ दूर्वाकुरान्सुहरितानमृतान्मङ्गलप्रदान् ॥ आनीतांस्तव पूजार्थं गृहाण गणनायक ॥ इतिदूर्वांकुरान् ॥ १४ ॥ ॐ वनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥ इतिधूपम् ॥ १५ ॥ ॐ साज्यं च वर्त्तिसंयुक्तं वह्नि ना योजितं मया ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ इति दीपम् ॥ १६ ॥ ॐ शर्कराघृतसं युक्तं मधुरं स्वादु चोत्तमम् ॥ उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ इति नैवेद्यम् ॥ १७ ॥ ॐ शीतलं निर्मलं तोयं कर्पूरेण समन्वितम् ॥ आचम्यतां सुरश्रेष्ठ मया दत्तं हि भक्तितः ॥ इत्याचमनी

यम् ॥ १८ ॥ ॐ इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलाऽऽवाप्तिर्भवेज्जन्मनिज
न्मनि ॥ इति ऋतुफलम् ॥ १९ ॥ ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ कर्पूरैलासमायुक्तं
तांबूलं प्रतिगृह्यताम् ॥ इति तांबूलम् ॥ २० ॥ ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥
अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ इति दक्षिणाम् ॥ २१ ॥ ॐ कदली गर्भसंभूतं कर्पूरं च
प्रदीपितम् ॥ आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥ इति नीराजनम् ॥ २२ ॥ ॐ नानासुगंध
पुष्पाणि यथाकालोद्भवानि च ॥ पुष्पांजलिं मया दत्तं गृहाण गणनायक ॥ इति पुष्पांज
लिम् ॥ २३ ॥ ॐ यानिकानि च पापानि ज्ञाताज्ञातकृतानि च ॥ तानि सर्वाणि नश्यंति प्रदक्षि
णपदे पदे ॥ इति प्रदक्षिणात्रयम् ॥ २४ ॥ अथ विशेषार्घः ॥ रक्षरक्ष गणाध्यक्ष रक्ष त्रैलोक्य
रक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिंधो षाण्मातुराग्रज प्रभो
वरद त्वं वरं देहि वांछितं वांछितार्थद ॥ २ ॥ गृहाणार्घ्यमिदं देव सर्वदेवनमस्कृत ॥ अनेन
सफलार्घ्येण फलदोस्तु सदा मम ॥ ३ ॥ ॐ सिद्धिबुद्धिसहितमहागणपतये नमः विशेषार्घं समर्प
यामि ॥ इति विशेषार्घः ॥ अथ प्रार्थना ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय

जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ २ ॥ इति प्रार्थना ॥ अनया पूजया सिद्धिबुद्धिसहित श्रीमहागणपतिः सांगः सपरिवारः प्रीयताम् ॥ इति गणपतिपूजनम् ॥ अथ स्वस्ति पुण्याहवाचनम् ॥ तत्रादौ कलशस्थापनम् ॥ महीद्यौरिति भूमिं स्पृष्ट्वा ॥ ॐ महीद्यौः पृथिवी च न इमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधयः समितियवान्क्षिप्त्वा ॥ ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥ ॥ २ ॥ आजिघ्रेतिकलशं स्थापयेत् ॐ आजिघ्रकलशम्मह्यात्वा विशन्त्विन्दवः ॥ पुनरूर्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ वरुणस्योत्तंभनमिति जलं पूरयेत् ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कंभसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसि ॥ वरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ४ ॥ त्वांगंधर्वा इति गंधं प्रक्षिपेत् ॥ ॐ त्वांगन्धर्वाऽअखनस्त्वामिंद्रस्त्वां बृहस्पतिः ॥ त्वामोषधेसोमोराजा विद्वान्यक्ष्मा

दमुच्यत ॥ ५ ॥ याऽओषधीरिति सर्वौषधीः ॥ ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणामहꣳशतन्धामानिसतच ॥ ६ ॥ काण्डात्काण्डादिति दूर्वाः ॥ ॐ काण्डात्काण्डा
त्परोहन्तीपरुषः परुषस्पारि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ७ ॥ अश्वत्थेवेति पंचपल्ल
वान् ॥ ॐ अश्वत्थेवोनिषदनम्पर्णेवोव्वतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ८ ॥
स्योनापृथिवीतिसप्तमृदः ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ ९ ॥
याः फलिनीरितिपुगीफलम् ॥ ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूता
स्तानोमुञ्चन्त्वꣳहसः ॥ १० ॥ परिवाजपतिरिति पंचरत्नानि ॥ ॐ परिवाजपतिः कविरग्नि
र्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेति हिरण्यम् ॥ ॐ हिरण्यगर्भः सम
वर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ १२ ॥
युवासुवासा इति रक्तवस्त्रेण वेष्टयेत् ॥ ॐ युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवतिजाय
मानः ॥ तंधीरासः कवयऽउन्नयन्तिसाध्योमनसादेवयन्तः ॥ १३ ॥ पूर्णादर्वीति पूर्णपात्रमुपरि
न्यसेत् ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेव्वविक्रीणावहाऽइषमूर्ज्जꣳ शतक्रतो ॥ १४ ॥

तत्त्वायामीति वरुणमावाह्य ॥ ॐ तत्त्वायामि ब्रह्मणाऽवन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ १५ ॥ ॐ वरुणं सांगं सपरिवारमावाहयामि । ॐ भूर्भुवः स्वः अपांपतिवरुणाय नमः इति गंधादिभिः संपूजयेत् । ततः ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ इति तीर्थान्यावाह्य ॥ कलशस्य मुखे विष्णुरित्यादिना कलशाभिमंत्रणं कृत्वा ॥ देवदानवसंवादे इति प्रार्थ्य ॥ ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक ॥ पुण्याहवाचनं यावत्तावत्त्वं सन्निधौभव ॥ १ ॥ इति वरुणं प्रणमेत् ॥ इति कलशस्थापनम् ॥ अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिं शिरस्याधायानंतरं दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा दीर्घानागानद्योगिरयस्त्रीणि विष्णुपदानि च ॥ ॐ त्रीणि पदाविचक्रमेॅविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ ॥ १ ॥ तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवंतो ब्रुवंतु ॥ इति यजमानः ॥ पुण्यं पुण्याहं दीर्घमायुरस्त्विति द्विजाः ॥ ( एवं सर्वत्र यजमानोत्तरं ब्राह्मणाः प्रतिवचनं दद्युः ) ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु । ॐ शिवा आपः संतु इतिजलं दद्यात् । संतु शिवा

आपः । इति प्रतिवचनम् ॥ ॐ सौमनस्यमस्तु इति पुष्पम् । अस्तु सौमनस्यम् ॥ ॐ अक्षतं चा
रिष्टं चास्तु इत्यक्षतान् । अस्त्वक्षतमरिष्टं च । ॐ गंधाः पांतु । इति गंधम् । सौमंगल्यं चास्तु ।
ॐ अक्षताः पांतु । आयुष्यमस्तु ॥ ॐ पुष्पाणि पांतु । सोश्रियमस्तु ॥ ॐ तांबूलानि पांतु ऐश्वर्यमस्तु ।
ॐ दक्षिणाः पांतु बहुधनमस्तु ॥ पुनरत्राः पांतु स्वर्चितमस्तु इति विप्रा ब्रूयुः ततो यजमानः
आचार्यादीन्प्रणम्य श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्त्विति भवंतो ब्रुवंतु ॥ इति
वदेत् । ते च श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्त्वित्युक्त्वा दीर्घमायुः शांतिः पुष्टि
स्तुष्टिश्चास्त्विति यजमानं मूर्धन्यभिषिंचेयुः । यं कृत्वा सर्ववेदयज्ञक्रियाकर्णकर्मारंभाः शोभनाः
प्रवर्तंते तमहमोंकारादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं
पुण्याहं वाचयिष्ये । ॐ वाच्यताम् । ततो ब्राह्मणानां हस्तेष्वक्षतान्दद्यात्ते चाशिषो दद्युः ॥ ॐ
भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंय
दायुः ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतान्देवानाꣳरातिरभिनोनिवर्तताम् ॥ देवानाꣳसख्यमुपसे
दिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजः

प्र० ॥ ७ ॥

प्रथमजर्ठ्ह्येतत् ॥ योबिभर्तिदाक्षायणठ्ठ हिरण्यर्ठ सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घ मायुः ॥ ३ ॥ दीर्घायुस्तऽओषधेरवनितायस्मैचत्वारवनाम्यहम् । अथोत्वन्दीर्घायुर्भूत्वाशतवल्शा ठ्विरोहतात् ॥ ४ ॥ द्रविणोदाद्द्रविणसस्तुरस्यद्रविणोदाः सरनरस्यप्रियंसत् ॥ द्रविणोदावीरव तीमिशन्नोद्रविणोदारासतेदीर्घमायुः ॥ ५ ॥ सवितापश्चात्तात्सविता० ॥ ६ ॥ नवोनवोभवति जायमानो० ॥ ७ ॥ उच्चादिविदक्षिणावन्तो ॥ ८ ॥ इत्याशीर्वादः ॥ व्रतजपनियम तपस्स्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ॥ इति यजमानः ॥ समाहितमनसः स्म इति द्विजः ॥ प्रसीदंतु भवंतः इति यजमानो ब्रूयात् ॥ प्रसन्नाःस्मः इति द्विजा ब्रूयुः ॥ ततो यजमानो ब्रूयात् ॥ ॐ शांतिरस्तु ॥ ( अस्त्विति द्विजाः प्रतिवचनं सर्वत्र दद्युः ) ॐ पुष्टिरस्तु । ॐ तुष्टिरस्तु । ॐ वृद्धिरस्तु । ॐ अविघ्नमस्तु । आयुष्यमस्तु । ॐ आरोग्यमस्तु । ॐशिवं कर्मास्तु । ॐ कर्मसमृद्धिरस्तु । ॐ वेदसमृद्धिरस्तु । ॐ शास्त्रसमृद्धिरस्तु । ॐ धनधान्यसमृद्धिरस्तु । ॐ पुत्रपौत्रसमृद्धिरस्तु । ॐ इष्टसम्पदस्तु । ॐ अरिष्टनिरसनमस्तु । ॐ यत्पापं यद्रोगं नः अशुभम् । अकल्याणं तद्दूरे प्रतिहतमस्तु । ॐ यच्छ्रेयस्तदस्तु । ॐ उत्तरे कर्मणि निर्विघ्नमस्तु । ॐ उत्तरोत्तर

महरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥ ॐ तिथिकरण मुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ अथोदकसेकः ॥ ( पात्रद्वयमग्रेधृत्वाप्रथमे ) ॐ तिथिकरणमुहूर्त नक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐ दुर्गापांचाल्यौ प्रियेताम् ॥ ॐ अग्निपुरोगा विश्वेदेवाः प्रीयंताम् ॥ ॐ इंद्रपुरोगा मरुद्गणाः प्रीयंताम् । ॐ माहेश्वरीपुरोगा उमामातरः प्रीयंताम् ॥ ॐ अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् ॥ ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् ॥ ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् ॥ ॐ ब्रह्म च ब्राह्मणाश्च प्रीयंताम् ॥ ॐ श्रीसरस्वत्यौ प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥ ॐ भगवती कात्यायनी प्रीयताम् ॥ ॐ भगवती माहेश्वरी प्रीयताम् ॥ भगवती ऋद्धिकरी प्रीतयाम् ॥ ॐ भगवती सिद्धिकरी प्रीयताम् ॥ ॐ भगवती पुष्टिकरी प्रीयताम् ॥ ॐ भगवती तुष्टिकरी प्रीयताम् ॥ ॐ भगवंतौ विघ्नविनायकौ प्रीयेताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयेताम् ॥ ॐ सर्वा ग्रामदेवताः प्रीयंताम् ॥ द्वितीये ॐ हताश्च ब्रह्मद्विषः । ॐ हताश्च परिपंथिनः । ॐ हताश्च विघ्नकर्तारः । ॐ शत्रवः पराभवं यांतु । ॐ शाम्यंतु घोराणि । ॐ शाम्यंतु पापानि । ॐ शाम्यंत्वीतयः ॥ ( पुनः प्रथमे ) ॐ शुभानि वर्द्ध

ताम् । शिवा आपः संतु ॥ ॐ शिवा ऋतवः संतु । ॐ शिवा ओषधयः संतु । ॐ शिवा नद्यः संतु । ॐ शिवा गिरयः संतु । ॐ शिवा अतिथयः संतु । ॐ शिवा अग्नयः संतु । ॐ शिवा आहुतयः संतु । ॐ अहोरात्रे शिवेस्याताम् ॥ ॐ निकामेनिकामेनः पर्ज्जन्योऽवर्षतुफलवत्योनऽओषधयः पच्यं तांयोगक्षेमोनः कल्पताम् ॥ १ ॥ ॐ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्य पुरोगाः सर्वेग्रहाः प्रीयंताम् । ॐ भगवान्नारायणः प्रीयताम् । ॐ भगवान् पर्जन्यः प्रीयताम् । ॐ भगवान् स्वामीमहासेनः प्रीयताम् ॥ ॐ पुण्याहकालान् वाचयिष्ये । इति यजमानः ॥ ॐ वाच्यतामिति प्रतिवचनम् । ब्राह्म्यं पुण्यं महद्यच्च सृष्टयुत्पादनकारकम् ॥ वेदवृक्षोद्भव नित्यं तत्पुण्याहं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मया क्रियमाणस्यामुकव्रतोद्यापनाख्यकर्मणः पुण्याहं भवंतो ब्रुवंतु । ॐ पुण्याहम् ३ एवं त्रिः प्रतिवचनं पठित्वा । ॐ पुनंतु मा देवजनाः पुनंतु मनसा धियः ॥ पुनंतु विश्वाभूतानि जातवेदः पुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवंतुनः ॥ १ ॥ भो ब्राह्मणाः मया क्रियमाणस्यामुकव्रतोद्यापनकर्मणः कल्याणं भवंतो ब्रुवंतु ॥ ॐ कल्याणम् ॥ ३ ॥ ॐ यथेमाँऽवाचङ्कल्याणीमावदानि

जनेभ्यः ब्रह्मराजन्याभ्या ९७ शूद्राचार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभू
यासमयम्मेकामः समृध्यतामुपमादोनमतु ॥ १ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥
संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मया क्रियमाणस्याऽमुकव्रतोद्या
पनकर्मणः ऋद्धिं भवंतो ब्रुवंतु ॐ ऋध्यताम् ३ ॥ ॐ सत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृता
ऽअभूम ॥ दिवम्पृथिव्याऽअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ॥ १ ॥ स्वस्तिस्तुयाविनाशाख्या
पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मया
क्रियमाणस्यामुकव्रतोद्यापनकर्मणः स्वस्तिं भवंतो ब्रुवंतु ॥ ॐ स्वस्ति ३। ॐ स्वस्तिनऽइन्द्रो वृद्ध
श्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥
समुद्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च मांगल्या तां श्रियं च ब्रुवंतु नः १। भो ब्राह्म
णाः मया क्रियमाणस्यामुकव्रतोद्यापनकर्मणः श्रीरस्त्विति भवंतो ब्रुवंतु । ॐ अस्तु श्रीः ३ ।
ॐ श्रीश्चते लक्ष्मीश्चपन्त्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणस
र्वलोकम्मऽइषाण ॥ १ ॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां

वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु । ॐ अस्तु परिपूर्ण इति विप्राः ॥ ( अथाभिषेकः ) । एकस्मिन्पात्रे कलशोदकं गृहीत्वा । अविधुराश्चत्वारो ब्राह्मणा दूर्वाम्रपल्लवैर्यजमानमभिषिंचेयुः ॥ तत्रःमंत्रा ॥ ॐ पयः पृथिव्यां० ॥१॥ पंचनद्यः० ॥२॥ वरुणस्योत्तं०॥३॥ पुनंतुमा०॥४॥देवस्य त्वा सवितुः प्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्यंत्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ५ ॥ देवस्य त्वा सवितुः प्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यां सरस्वत्यैव्वाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ६ ॥ देवस्य त्वा० अश्विनोर्भैषज्येन ॥ तेजसा ब्रह्मव्वर्च्चसायाभिषिञ्चामि सरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण ॥ बलायश्रियैयशसेभिषिंचामि ॥ ७ ॥ विश्वानिदेव० ॥ ८ ॥ धामच्छदग्निरिन्द्रो ब्रह्मादेवी बृहस्पतिः । सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनः शुभे ॥ ९ ॥ त्वँयविष्ठदाशुषोनॄँः पाहि श्रृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ १० ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेशंचतुष्पदे ॥ ११ ॥ ॐ द्यौः शांतिरन्त० ॥ १२ ॥ यतोयतः समीयतः समीहसे० ॥ १३ ॥ अमृताभिषेकोस्तु शांतिः शांतिः शांतिः सुशांतिर्भवतु ॥ अनेन पुण्याहवाचनेन अमुकदेवता प्रीय

ताम् ॥ इति पुण्याहवाचनम् ॥ अथ मातृकापूजन ॥ ( पीठे अक्षतपुंजेषु पुगीफलेषु वा गौर्यादि मातृका निवेश्याः ) तद्यथा । ॐ गणेशाय नमः गणेशमावाहयामि ॥ १ ॥ ॐ गौर्य्यै नमः गौरीमावा हयामि ॥ १ ॥ ॐ पद्मायै नमः पद्मामाहयामि ॥ २ ॥ ॐ शच्यै नमः शचीमावाहयामि ॥ ३ ॥ ॐ मेधायै नमः मेधा० ॥ ४ ॥ ॐ सावित्र्यै नमः सावित्रीम्० ॥ ५ ॥ ॐ विजयायै नमः विजया म्० ॥ ६ ॥ ॐ जयायै नमः जया० ॥ ७ ॥ ॐ देवसेनायै नमः देवसेना० ॥ ८ ॥ ॐ स्वधायै नमः स्वधा० ॥ ९ ॥ ॐ स्वाहायै नमः स्वाहा० ॥ १० ॥ ॐ मातृभ्योनमः मातॄरावाहया मि ॥ ११ ॥ ॐ लोकमातृभ्यो नमः लोकमातॄरावाहयामि ॥ १२ ॥ ॐ हृष्टयै नमः हृष्टि० ॥ १३ ॥ ॐ पुष्टयै नः पुष्टिमावा० ॥ १४ ॥ ॐ तुष्टयै नमः तुष्टिमावाह० ॥ १० ॥ ॐ कुलदेवतायै नमः कुलदेवतामावाहयामि ॥ १६ ॥ इत्यावाह्य । ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनो त्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामो ३ म्प्रतिष्ठ ॥ १ ॥ इतिप्रतिष्ठाप्य । ॐ गौर्य्या दिषोडशमातृकाभ्यो नमः । इतिनाममंत्रेणषोडशोपचारैः संपूजयेत् ॥ ततः कुड्ये आवाहितमातॄणा मुपरि घृतेन कुंकुमाक्तेन दक्षिणोत्तराः सप्त पंच तिस्रो वा धारा दद्यात् ॥ ॐ वसोः पवित्रमसिशत

धारं वसोः पवित्रमसिसहस्रधारं देवस्त्वा सविता पुनातु ॥ व्वसोः पवित्रेण शतधारेण सुप्वाकाम धुक्षः ॥ १ ॥ अथ घृतमातृकानामानि । श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिःश्रद्धा सरस्वती ॥ मांगल्येषु प्रपूज्यंते सप्तैता घृतमातरः ॥ १ ॥ ॐ श्रियै नमः श्रियमावाहयामि ॥ १ ॥ ॐ लक्ष्म्यै नमः लक्ष्मीमा वाहयामि ॥ २ ॥ ॐ धृत्यै नमः धृतिमावा० ॥ ३ ॥ ॐ मेधायै नमः मेधामा० ॥ ४ ॥ ॐ पुष्ट्यै नमः पुष्टिमावा० ॥ ५ ॥ ॐ श्रद्धायै नमः श्रद्धामा० ॥ ६ ॥ ॐ सरस्वत्यै नमः सरस्वतीमावाहयामि ॥ ७ ॥ इत्यावाह्य ॥ ॐ घृतमातृकाभ्यो नमः । इति षोडशोपचारैः संपूजयेत् ॥ अथायुष्यम् ॥ ॐ आयु ष्यंवर्चस्यर्ठ॒रायस्पोषमौद्भिदम् ॥ इदर्ठ॒हिरण्यम्वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नतद्रक्षार्ठ॒सि न पिशाजास्तरन्तिदेवानामोजः प्रथमर्ठ॒ह्येतत् ॥ योबिभर्तिदाक्षायणर्ठ॒ हिरण्यर्ठ॒ सदेवेषुकृ णुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥ २ ॥ यदाबध्नंदाक्षायणाहिरण्यर्ठ॒शतानीकायसुमन स्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ३ ॥ इतिमातृकापूजनम् ॥ ततो नांदीश्राद्धं कुर्यात् ॥ ( तत्प्रयोगस्तु मत्कृतशांतिप्रकाशादिषु द्रष्टव्यः ) ॥ अथाचार्यादिवरण म् ॥ यजमानः आचार्यस्य जान्वालभ्य । देशकालौ संकीर्त्यअमुकगोत्रोऽमुकशर्माहममुकव्रतोद्या

पनकर्मणि विहितकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षततांबूलमुद्रिकावासोभिराचार्यत्वेन त्वामहं वृणे । इति वृत्वा वृतोस्मीति प्रतिवचनानंतरं गंधादिभिः संपूज्य । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मप यज्ञेस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥ इति प्रार्थयेत् ॥ ततो ब्रह्मवरणम् ॥ देशकालौ संकीर्त्य० अमुकगोत्रोऽमुकशर्मा अमुकव्रतोद्यापनकर्मणि विहितकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षततांबूलमुद्रिकावासोभिर्ब्रह्मत्वेन त्वामहंवृणे । वृतोस्मीति प्रतिवचनानंतरं गंधपुष्पैः संपूज्य । यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः । तथा त्वं मम यज्ञेस्मिन्ब्रह्मा भव द्विजोत्तम ॥ १ ॥ इतिप्रार्थयेत् ॥ ततः ऋत्विजश्चतुरो द्वौ वा वृणुयात् । देशकालौ संकीर्त्य अमुकव्रतोद्यापनकर्मणि विहितकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षततांबूलमुद्रिकावासोभिर्ऋत्विक्त्वेन त्वामहं वृणे । वृतोस्मीति प्रतिवचनानंतरं गन्ध पुष्पादिभिः संपूज्य ॥ भगवन्सर्वकर्मज्ञ सर्वधर्मभृतांवर ॥ वितते मम यज्ञेस्मिन्नृत्विक्त्वं भव सुव्रत ॥ इति प्रार्थयेत् ॥ वतो यथाचारं सर्वेषां मधुपर्कपूजां कृत्वा ॥ अस्य यागस्य निष्पत्तौ भवंतोभ्यर्थितामया ॥ सुप्रसन्नैश्च कर्तव्यं कर्मेदं विधिपूर्वकम् ॥ इति प्रार्थयेत् ॥ इत्याचार्यादिवरणप्रयोगः ॥

प्र० ॥११॥

अथाचार्यकर्म आचम्य । प्राणानायम्य । देशकालौ स्मृत्वा । अस्मिन्नमुकव्रतोद्यापनकर्मणि यजमानेन वृतोहमाचार्यकर्म करिष्ये । इति संकल्प्य शरीरशुद्ध्यर्थं सहस्रशीर्षेति पुरुषसूक्तन्यासं कुर्यात् षोडशर्चं वा जपेत् ॥ तत आचार्यो गौरसर्षपलाजान् गृहीत्वा दिग्रक्षणं कुर्यात् ॥ तत्र मंत्राः ॥ ॐरक्षोहणम्वल गहनम्वैष्णवीमिदहन्तम्वलगमुत्किरामि यम्मे निष्ट्योयममात्यो निचखानेदमहन्तम्वलगमुत्किरामियम्मेसमानोयम समानो निचखानेदमहन्तम्वलगमुत्किरामियम्मेसबन्धुर्य्यमसबंधुर्निचखानेदमहन्तम्वलगमुत्किरामियम्मेसजातोयमसजातो निचखानोत्कृत्याङ्किरामि ॥ १ ॥ रक्षोहणोवोव्वलगहनःप्रोक्षामिवैष्णवान्रक्षोहणोवोव्वलगहनोवनयामि वैष्णवान्रक्षोहणो वोव्वलगहनो वस्तृणामिवैष्णवान्रक्षोहणौवांव्वलगहनाऽउपदधामि व्वैष्णवीरक्षोहणौवांव्वलगदनौपर्य्यूहामि वैष्णवीवैष्णवमसिवैष्णवास्थ ॥ २ ॥ रक्षसाम्भागोसिनिरस्तꣳरक्षऽइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षोवबाधऽइदमहꣳरक्षोधमन्तमोनयामि । घृतेनद्यावापृथिवीप्रोर्णुवाथांव्वायोव्वेस्तोकानामग्निराज्यस्यव्वेतुस्वाहा स्वाहाकृतेऽऊर्ध्वनभसंमारुतङ्गच्छतम् ॥ ३ ॥ रक्षोहा व्विश्वचर्षणिरभियोनियमोहते द्रोणे सधस्थमासदत् ॥ ४ ॥ अपसर्पन्तु ये भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यंतु

शिवाज्ञया ॥ ५ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामवरोधेन शुभकर्म समा
रभे ॥ ६ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु
॥ ७ ॥ इति मंत्रैरीशानादिप्रदक्षिणक्रमेण सर्वदिक्षु विकीर्य । ॐ देवा आयांतु यातुधाना अपयांतु विष्णो
देव यजनं रक्षस्वेति रक्षां कुर्यात् ॥ उदकस्पर्शः ॥ ततो यथाविधिना पंचगव्यं कृत्वा । ॐ आपोहिष्ठा
मयोभुवरिति त्रिभिर्मंत्रैः कर्मभूमिं संभारांश्च प्रोक्ष्य भूमिपूजनं कुर्यात् ॥ ॐ भूरसिभूमिरस्य
दितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छपृथिवींदृंहपृथिवीम्माहिंसीः ॥१॥
ॐ भूर्भुवः स्वः पृथिवीकूर्मा नंतदेवताभ्यो नमः । इति गन्धादिभिः संपूज्याकृतांजलिः ॐ स्वस्ति
नऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥
इति मंत्रं पठेत् ॥ अथाग्निस्थापनम् ॥ तद्यथा-हस्तमात्रपरिमिते चतुरंगुलोच्छ्रिते तुषकेशशर्करा
दिरहिते चतुरस्रे वा वर्तुले स्थंडिले भूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयदकेनोप
लिप्य स्रुवमूलेनप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणैवाऽनामिकांगुष्ठाभ्यां मृद
मुद्धृत्य जलेनाभ्युक्ष्य ततः कांस्यपात्रस्थं वह्निं द्वितीयकांस्यपात्रेणापिहितमुपसमाधाय आनीतमग्निं

स्थंडिलस्याग्नेय्यां निधाय ॐ हुंफट् इति मंत्रेण क्रव्यादांशं नैर्ऋत्यां दिशि किंचित्परित्यज्य । तत ॐ अग्निं दूतंपुरोदधेहव्यवाहमुपब्रुवे देवाँ २ऽआसादयादिह ॥ १ ॥ इति मंत्रेणात्माभिमुखं स्थापयेत् ॥ ततः आनीताग्नेयपात्रयोः साक्षतोदकं निषिच्य । अग्निमुखं कृत्वा ध्यायेत् ॥ ॐ चत्वारिशृङ्गात्र योऽअस्यपादाद्वेशीर्षे सप्तहस्तासोऽअस्य । त्रिधाबद्धो वृषभोरोरवीतिमहोदेवोमर्त्या२ऽआविवेश ॥ १ ॥ अग्ने वैश्वानर शांडिल्यगोत्र शांडिल्यासितदेवलेतिप्रवराचित भूमिमातः वरुणपितः मेषध्वजप्रा ङ्मुख मम संमुखो भव इत्यग्निं प्रतिष्ठाप्य ॐ अग्निपुरुषाय नमः । इतिमंत्रेण वायव्यकोणे बर्हि अग्निं षोडशोपचारैः संपूज्य प्रार्थयेत् । अग्निं प्रज्वलितं वंदे जातवेदं हुताशनम् ॥ हिरण्यवर्ण मनलं समृद्धं विश्वतोमुखम् ॥ इत्यग्निस्थापनम् ॥ अथ नवग्रहपूजनम् ॥ ( यद्यपि व्रतोद्यापनग्रंथेषु ग्रहपूजनं नोक्तं तथापि शिष्टाचाराल्लिख्यते ) तत्रादौ ग्रहमंडलमध्ये वर्तुले मण्डले रक्तपुष्पाक्षतैः प्राङ् मुखं सूर्यमावाहयेत् ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथे नादेवोयातिभुवनानिपश्यन् ॥ ॐ भूर्भुवःस्वः कलिंगदेशोद्भवकाश्यपसगोत्र रक्तवर्ण भोसूर्य इहागच्छ इहतिष्ठ । ॐ सूर्यायनमःसूर्यमावाहयामि । इति सूर्यं स्थापयेत् ॥ १ ॥ आग्नेय्यां दिशि चतुरस्रेऽव

चन्द्राकारे वा मंडले शुक्लपुष्पाक्षतैः सोमं० ॐ इमंदेवाऽअसपत्नर्ठ॑सुवध्वंमहतेक्षत्रायमहतेज्यै
ष्ठ्याय महतेजानराज्यायेंद्रस्येन्द्रियाय ॥ इममुष्यपुत्रममुष्यैपुत्रमस्यै॑विशऽएषयोमीराजासोमो
ऽस्माकं ब्राह्मणानार्ठ॑ राजा ॥ ॐ भूर्भुवःस्वर्यमुनातीरदेशोद्भव आत्रेयसगोत्र शुक्लवर्ण भो सोम
इहागच्छ इहतिष्ठ । ॐ सोमाय सोममावाहयामि ॥ २ ॥ दक्षिणस्यां दिशि त्रिकोण
मण्डले दक्षिणमुखं रक्तपुष्पाक्षतैर्भौमं० । ॐ अग्निमूर्द्धादिवःककुत्पतिःपृथिव्याऽअयम् ॥
अपा॑ᳬरेता॑ᳬसिजिन्वति ॥ ॐ भू० अवंतिदेशोद्भव भारद्वाजसगोत्र रक्तवर्ण भो भौम इहा० । ॐ
भौमायनमः ॥ ३ ॥ ईशान्यां दिशि बाणाकारमण्डले उदङ्मुखं पीतपुष्पाक्षतैर्बुधं० । ॐ उद्बुध्यस्वाग्ने
प्रतिजागृहीत्वमिष्टापूर्तेसर्ठ॑सृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवायजमानश्चसी
दत ॥ ॐभू० मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण भो बुध इहा० । ॐ बुधाय नमः ॥ ४ ॥ उत्तरस्या
दिशि चतुरस्रे मंडले पीतपुष्पाक्षतैर्बृहस्पतिम् ॥ ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥
यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणधेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भव आंगिरसगोत्र पीत
वर्ण भो बृहस्पते इहा० । ॐ बृहस्पतये नमः ॥ ५ ॥ पूर्वस्यां दिशि पंचकोणमंडले प्राङ्मुखं शुक्ल

पुष्पाक्षतैःशुक्रं० ॥ ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत् क्षत्रम्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्य मिन्द्रियंविपाᳫ्ँशुक्रमंधसऽइन्द्रस्येन्द्रियमिदम्पयोमृतंमधु ॥ ॐ भू० भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण भो शुक्र इहा० । ॐ शुक्राय नमः ॥ ६ ॥ पश्चिमायां दिशि धनुषाकारमंडले प्रत्यङ्मुखं कृष्णपुष्पाक्षतैःशनैश्चरम्० । ॐ शन्नोदेवीरभिष्टयः आपोभवन्तुपीतये शँय्योरभिस्रवतुनः ॥ ॐ भू० सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण भो शनैश्चर इहा० ॥ ॐ शनैश्चराय नमः ॥ ७ ॥ नैर्ऋत्यां दिशि शूर्पाकारमंडले दक्षिणाभिमुखं कृष्णपुष्पाक्षतै राहुम्० ॥ ॐ कयानश्चित्रऽआभुवदूतीसदा वृधः सखा ॥ कयासचिष्ठयावृता ॥ ॐ भू० राठिणापूरोद्भव पैठिनसगोत्र कृष्णवर्ण भो राहो इहा० । ॐ राहवे नमः ॥ ८ ॥ वायव्यां दिशि ध्वजाकारमंडले दक्षिणाभिमुखं धूम्रपुष्पाक्षतैः केतुम् ॥ ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ॐ भूर्भुवःस्वःअंतर्वेदिसमुद्भव जैमिनिसगोत्र धूम्रवर्ण भो केतो इहागच्छ इह तिष्ठ ॐ केतवे नमः केतुमावाहयामि ॥ ९ ॥ इति सूर्यादिनवग्रहस्थापनम् ॥ अथाधिदेवतादिस्थपानम् ॥ सूर्यस्य दक्षिणपार्श्वे । ॐ त्र्यंबकंयजामहेसु गंधिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भूर्भुवः स्वः ईश्वर इहा० । ॐ

ईश्वराय नमः ॥ १ ॥ सोमदक्षिणपार्श्वे । ॐ श्रीश्चतेलक्ष्मीश्च० ॥ ॐ भू० उमे इहा० उमायै नमः ॥ २ ॥ भौमदक्षिणपार्श्वे । ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्तसमुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजानन्तेऽअर्वन् ॥ ॐ भू० स्कंद इहा० ॐ स्कंदाय नमः ॥ ३ ॥ बुधदक्षिणापार्श्वे ॐ विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्थोव्विष्णोस्यूरसिव्विष्णोःध्रुवोसि ॥ वैष्णवमसिव्विष्णवेत्वा ॥ ॐ भू० विष्णो इहा० ॐ विष्णवे नमः ॥ ४ ॥ गुरुदक्षिणापार्श्वे । ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोव्वेनआवःसबुध्न्याऽउपमाऽअस्याविष्ठाःसतश्चयोनिमसतश्चव्विवः ॥ ॐ भू० ब्रह्मन्निहा० ॐ ब्रह्मणेनमः ॥ ५ ॥ शुक्रदक्षिणपार्श्वे ॐ सजोषाऽइन्द्र सगणो मरुद्भिः सोमम्पिब वृत्रहा शूरव्विद्वान् । जहिशत्रुँरपमृधोनुदस्वाथाभयङ्कृणुहिव्विश्वतोनः । ॐ भू० इंद्र इहा० ॐ इंद्राय नमः ॥ ६ ॥ शनिदक्षिणपार्श्वे ॐ यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा स्वाहाघर्मायस्वहाघर्मः पित्रे । ॐ भू० यम इहा० ॐ यमायनमः ॥ ७ ॥ राहोर्दक्षिणपार्श्वे । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामिसमापोऽअद्भिरग्मतसमोषधीभिरोषधीः । ॐ भू० काल इहा० ॐ कालायनमः ॥ ८ ॥ केतुदक्षिणपार्श्वे ॐ चित्राव्वसो स्वस्तितेपारमशीय । ॐ भू० चित्रगुप्त इहा० ॐ चित्रगुप्ताय

ग्र०

॥१४॥

नमः ॥ ९ ॥ इत्यधिदेवताः ॥ अथप्रत्यधिदेवतास्थापनम् ॥ सूर्यस्य वामपार्श्वे । ॐ अग्निंदूतंपुरोदधेह
व्यवाहमुपब्रुवे । देवां २ ऽआसादयादिह । ॐ भू० ॐ अग्ने इहा० अग्नये नमः ॥ १ ॥ सोम
वामपार्श्वे । ॐ आपोहिष्ठामयोभुवस्तानऽउर्ज्जेदधातन । महेरणायचक्षसे । ॐ भू० आप इहागच्छत
इहतिष्ठत । ॐ अद्भ्योनमः ॥ २ ॥ भौमवामपार्श्वे । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ।
यच्छानः शर्म्मसप्रथाः । ॐ भू० पृथिवि इहा० ॐ पृथिव्यै नमः ॥ ३ ॥ बुधवामपार्श्वे । ॐ इद
म्विष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरेस्वाहा । ॐ भू० विष्णो इहा० । ॐ विष्णवे
नमः ॥ ४ ॥ गुरुवामपार्श्वे । ॐ त्रातारमिन्द्रमवितारमिन्द्रᳬ० हवेहवेसुहवᳬ० शूरमिन्द्रम् ॥ ह्वयामि
शक्रम्पुरुहूतमिन्द्रᳬ० स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भू० इन्द्र इहा० ॐ इन्द्रायनमः ॥ ५ ॥
शुक्रवामपार्श्वे । ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीष पूषासिधर्म्मायदीष्व । ॐ भू० इंद्राणि इहा०
ॐ इन्द्राण्यै नमः ॥ ६ ॥ शनिवामपार्श्वे । ॐ प्रजापतेनत्त्वदेतान्न्यन्योविश्वारूपाणिपरिताबभूव ।
यत्कामास्तेजुहुमस्तन्नोऽअस्तुव्वयᳬ० स्यामपतयोरयीणाम् ॥ ॐ भू० प्रजापतये इहा० ॐ प्रजापतये
नमः ॥ ७ ॥ राहुवामपार्श्वे ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यः सर्पे

भ्यो नमः । ॐ भू० सर्पा इहा० ॐ सर्पेभ्यो नमः ॥ ८ ॥ केतुवामपार्श्वे । ॐ ब्रह्म यज्ञानं० ॐ भूर्भुवः स्वः ब्रह्मन्निहा० ॐ ब्रह्मणे नमः ॥ ९ ॥ इति प्रत्यधिदेवताः ॥ अथ पंचलोकपालस्थापनम् ॥ राहोरुत्त रतः । ॐ गणानान्त्वा० ॐ भू० गणपते इहा० ॐ गणपतये नमः ॥ १ ॥ शनेरुत्तरतः । ॐ अंबेअंबिकेंबालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीम् ॥ ॐ भू० दुर्गे इहा० ॐ दुर्गायै नमः ॥ २ ॥ रवेरुत्तरतः ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳ० सहस्रिणीभिरुपयाहियज्ञम् वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातःस्वस्तिभिःसदानः । ॐ भू० वायो इहा० । ॐ वायवेनमः ॥ ३ ॥ राहोर्दक्षिणे ॥ ॐ घृतंघृतपावानः पिबतव्वसाम्वसापानः पिबतान्तरिक्षस्यहविरसिस्वाहादिशः प्रदिशआदिशोविदिशउद्दिशोदिग्भ्यः स्वाहा । ॐ भू० आकाश इहा० ॐ आकाशाय नमः ॥ ४ ॥ केतोर्दक्षिणे ॥ ॐ यावाङ्कशामधुमत्यश्विनासूनृतावतीतया यज्ञम्मिमिक्षताम् ॥ ॐ भू० अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥ ॐ अश्विभ्यां नमः ॥ ५ ॥ अथ प्रागादितः पीठसमंता दिक्पालानावाहयेत् ॥ पूर्वे ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भू० इंद्र इहा० ॐ इंद्राय नमः ॥ १ ॥ आग्ने

ध्याम् ॥ ॐ त्वन्नोऽग्नेतववायुभिर्मघोनोरक्षतनश्ववन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषठ्ठँरक्ष माणस्तव व्रते ॥ ॐ भू० अग्ने इहा० ॐ अग्नये नमः ॥ २ ॥ दक्षिणे ॥ ॐ यमायत्वांगिरस्वतेपितृम तेस्वाहा स्वाहाघर्माय स्वाहा घर्मःपित्रे ॥ ॐ भू० यम इहा० ॐ यमाय नमः ॥ ३ ॥ नैर्ऋत्याम् ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनि र्ऋतेतुभ्यमस्तु ॥ ॐ निर्ऋते इहा० ॐ निर्ऋतये नमः ॥ ४ ॥ पश्चिमे ॥ ॐ तत्त्वायामिब्रह्मणाव्वन्दमा नस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशठ्ठँसमानऽआयुःप्रमोषीः ॥ ॐ भू० वरुण इहा० ॐ वरुणाय नमः ॥ ५ ॥ वायव्याम् ॐ आनोनियुद्भिः शतिनीभिरध्वरठ्ठँ सहस्रिणीभि रुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ ॐ भू० वायो इहा० ॐ वायवे नमः ॥ ६ ॥ उत्तरे ॥ ॐ वयठ्ठँ सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐ भू० कुबेर इहा कुबेराय नमः ॥ ७ ॥ ईशान्याम् ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धिय ञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥ ॐ भू० ईश्वर इहा० ईश्वराय नमः ॥ ८ ॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम् ॥ ॐ अस्मेरुद्रामेहनापर्व्वतासो

वृत्रहत्येभरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाऽअस्माँ२ऽअवन्तुदेवाः ॥ ॐ भू० ब्रह्मन्निहा ॐ ब्रह्मणे नमः ॥ ९ ॥ निर्ऋतिपश्चियोर्मध्ये अधस्थायाम् ॐ स्योनापृथिविनोभवानृक्ष रानिरेषनी ॥ यच्छानः शर्मसप्रथाः ॥ ॐ भू० अनंत इहा० ॐ अनंताय नमः ॥ १० ॥ एवं क्रतुसंरक्षक देवतास्थापनं कृत्वा ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामों ३ प्रतिष्ठ ॥ १ ॥ ॐ आदित्यादिग्रहमंडलदेवताभ्यो नमः सुप्रतिष्ठिता वरदा भवत । इति प्रतिष्ठाप्य । देशकालौ स्मृत्वा । इह सकलशांतिपूर्वकं सकलदुरितोपशमनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखामुकव्रतोद्यापनकर्मणिसूर्यादिनवग्रहाणामधिदेवतानां प्रत्यधिदेवतानां पंचलोकपालानां दशदिक्पालानां च पूजनं करिष्ये । इति संकल्पयेत् ॥ ततः ॐ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्रायमतिंतेषांविशिप्रियाणाम्वोहमिषमूर्ज्जꣳसमग्रभमुपयाम गृहीतोसीन्द्रा यत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १ ॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहेभ्यो नमः ॥ ॐ रुद्राद्यधिदेवताभ्योः नम ॥ ॐ अग्न्यादिप्रत्यधिदेवताभ्यो नमः ॥ ॐ विनायकादि पंचलोकपालेभ्यो नमः । ॐ इंद्रादिदशादिग्पालेभ्यो नमः इति नाममंत्रैः प्रत्येकं तत्तद्वर्णयुक्तगंध

पुष्पधूपदीप ( वक्ष्यमाण ) नैवेद्यतांबूलदक्षिणादिभिः संपूजयेत् । नैवेद्यं तु वेदीसमीपे भूमौ दद्यात् । तद्यथा । सूर्याय गुडौदनम् । सोमाय घृतपायसम् । भौमाय मसूरान्नम् । बुधाय क्षीरोदनम् । गुरुवे दध्योदनम् । शुक्राय घृतौदनम् । शनैश्चराय तिलपिष्टम् । राहवे तिलमाषान्नम् । केतवे चित्रौदनम् । अन्येभ्यः पायसं च सर्वेभ्यो वा पायसं समर्प्य क्षमापयेत् ॥ अनया पूजया आदित्यादिग्रहमंडलदेवताः प्रीयंतामिति पठेत् ॥ ततस्तदीशान्यां ग्रहसंबंधिरुद्रकलशम् । ॐ महीद्यौरित्यादिमंत्रैः पूर्ववत्संस्थाप्य तत्र तत्त्वायामीतिवरुणमावाह्य संपूज्य कलशस्य मुखेविष्णुरित्यभिमंत्र्य । देवदानवसंवादे० इत्यादिप्रार्थयेत् । ततस्तदुपरि ॥ ॐ असंख्यातासहस्राणियेरुद्राऽअधिभूम्याम् । तेषाᳬंसहस्रयोजनेवधन्वानितन्मसि ॐ भूर्भुवः स्वः रुद्रा इहागच्छतेहतिष्ठत । ॐ रुद्रेभ्योनमः ॥ इति षोडशोपचारैः पूजयेत् ॥ इति नवग्रहमंडलपूजनम् ॥ अथसर्वव्रतोद्यापनोपयोगि सर्वतोभद्रमण्डलदेवातापूजापद्धतिः ॥ आचम्य प्राणानायम्य देशकालौस्मृत्वा । अमुकव्रतोद्यापनकर्मणि एतत्सर्वतोभद्रमण्डले वेदमंत्रैर्ब्रह्मादिदेवतावाहनं प्रतिष्ठा पूजनं च करिष्ये । इति संकल्पं कृत्वा पुष्पाक्षतानादाय । मध्ये ब्रह्माणमावाहयेत् ॥ तत्रमंत्रः ॐ ब्रह्म यज्ञान प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः । सबुध्न्या

ऽउपमाऽअस्य विष्ठाःसतश्चयोनिमसतश्चव्विवः ॥ ॐ भूर्भुवःस्वर्ब्रह्मन्निहागच्छ इह तिष्ठ । ॐ ब्रह्मणे नमः ॥ १ ॥ उत्तरे सोमम् । ॐ वयꣳ सोमव्रतेतवमनस्तनूषुबिभ्रतःप्रजावन्तः सचेमहि ॥ ॐ भू० सोम इहा० । ॐ सोमाय नमः ॥ २ ॥ ऐशान्यामीशानम् । ॐ तमीशानंजगतस्तस्थुपस्पतिन्धियञ्जिन्न्वम सेहूमहेव्वयम् ॥ पूषानो यथावेद सामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ॐ भू० ईशान इहा० । ॐ ईशानाय नमः ॥ ३ ॥ पूर्वस्यां दिशि इंद्रम् । ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ० स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भू० इंद्र इहा० । ॐ इंद्राय नमः ॥ ४ ॥ आग्नेय्यामग्निम् । ॐ त्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशु चानोव्विश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ॐ भू० अग्ने इहा० । ॐ अग्नये नमः ॥ ५ ॥ दक्षिणे यमम् । ॐ सुगन्नः पंथाम्प्रदिशन्नऽएहिज्योतिष्मध्येह्यजरन्नऽआयुः अपैतुमृत्युरमृतंमऽआगाद्वैवस्वतोनोऽअभयंकृ णोतु ॥ ॐभूः० यम इहा० । ॐ यमाय नमः॥६॥ नैर्ऋत्यांनिर्ऋतिम् । ॐ असुन्न्वन्तमयजमानमिच्छस्तेन स्येत्यामन्विहितस्करस्य ॥ अन्न्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ भू० निर्ऋते इहा० । ॐ निर्ऋतये नमः ॥ ७ ॥ पश्चिमे वरुणम् । ॐ तत्वायामिब्रह्मणाव्वंदमानस्तदाशास्तेय

जमानोहविर्भिः ॥ अहेडमानोऽवरुणेहबोध्युरुशर्ठ समानऽआयुः प्रमोषीः ॥ ॐ भू० वरुण इहा० । ॐ वरुणाहि नमः ॥ ८ ॥ वायव्यां वायुम् । ॐ आनोनियुद्भिःशतिनीभिरध्वरठं सहस्रिणीभिरुपयाहियज्ञम् ॥ व्वायोऽस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ ॐ भू० वायो इहा० । ॐ वायवे नमः ॥ ९ ॥ वायुसोमयोर्मध्ये अष्टवसून् ॥ ॐ व्वसोः पवित्रमसिशतधारंव्वसोः पवित्रमसिसहस्रधारम् ॥ देवस्त्वसवितापुनातुव्वसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ ॐ भू० अष्टौ वसव इहागच्छंतु इह तिष्ठंतु । ॐ वसुभ्यो नमः ॥ १० ॥ सोमेशानयोर्मध्ये एकादशरुद्रान् ॥ ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवे नमः ॥ बाहुभ्यामुतते नमः ॥ ॐ भू० एकादशरुद्रा इहा० । ॐ रुद्रेभ्यो नमः ॥ ११ ॥ ईशानपूर्वयोर्मध्ये द्वादशादित्यान् । ॐ अदितिर्द्यौरदितिरन्तारिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ ॐ भू० द्वादिशादित्या इहा० । ॐ आदित्येभ्यो नमः ॥ १२ ॥ इंद्राग्न्योर्मध्येऽश्विनौ । ॐ अश्विनातेजसाचक्षुः प्राणेन सरस्वतीवीर्यम् ॥ वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ॐ भू० अश्विनौ इहागच्छतमिह तिष्ठतम् । ॐ अश्विभ्यां नमः ॥ १३ ॥ अग्नियमयोर्मध्ये विश्वेदेवान्सपितॄन् ॥ ॐ विश्वेदेवास ऽआगतश्रृणुता

प्र० मऽइमर्ठं हवम् ॥ एदंबर्हिर्निषीदत ॥ ॐ भू० विश्वेदेवा इहा० ॐ विश्वेभ्यो देवेभ्यो नमः
॥ १४ ॥ तत्रैव । ॐ आयन्तुनःपितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे
॥१८॥ स्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥ ॐ भू० पितर इहा० । ॐ पितृभ्यो नमः ॥ १५ ॥ यमनि
र्ऋत्योर्मध्ये यक्षान् ॥ ॐ अभित्यंदेवर्ठं सवितारमोण्योः कविक्रतुमर्चामिसत्यसर्ठं० रत्नधा
मभिप्रियम्मतिङ्कविम् ॥ ऊर्ध्वायस्यामतिर्भाऽदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुः कृपा
स्वः ॥ प्रजाभ्यस्त्वाप्रस्त्वानुप्प्राणन्तुप्रजास्त्वामनुप्राणिहि । ॐ भूः० यक्षा इहा० । ॐ यक्षेभ्यो
नमः ॥ १६ ॥ निर्ऋतिवरुणयोर्मध्ये भूतनागान् ॥ ॐ भूतायत्वानारातयेस्वरभिविख्येषंदृर्ठं०
हन्तान्दुर्य्याः पृथिव्यामुर्व्वन्तरिक्षमन्न्वेमिपृथिव्यास्त्वानाभौसादयाम्यदित्याऽउपस्थेग्नेहव्यर्ठंरक्ष ॥ ॐ
भू० भूतानि इहा० । ॐ भूतेभ्यो नमः ॥ १७ ॥ तत्रैव सर्पान् । ॐ नमोस्तुसर्पेभ्योयेके ॥१८॥
चपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्यो नमः । ॐ भू० सर्पा इहा० । ॐ सर्पेभ्यो नमः ॥१८॥
वरुणवाय्व्योर्मध्ये गन्धर्वाप्सरसः । ॐ गन्धर्वस्त्वाविश्वावसुः परिदधातु विश्वस्यारिष्टयैयजमान
स्यपरिधिरस्यग्निरिडऽईडितः ॥ इंद्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्टयै यजमानस्यपरिधिर

स्यग्निरिडऽईडितः ॥ मित्राव्वरुणौत्वोत्तरतः परिधत्तां ध्रुवेणधर्म्मणा व्विश्वस्यारिष्ट्यैयजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ ॐ भू० गंधर्वा इहा० । ॐ गंधर्वेभ्यो नमः ॥ १९ ॥ तत्रैवाप्सरसः । ॐ अयम्पुरोहरिकेशः सूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानिग्रामण्यौ ॥ पुंजिकस्थला चक्रतुस्थला चाप्सरसौ दंक्षणवः पशवोहेतिः पौरुषेयोवधः प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्वि ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः । ॐ भू० अप्सरस इहागच्छत इह तिष्ठत । ॐ अप्सरोभ्यो नमः ॥ २० ॥ ब्रह्मसोमयोर्मध्ये० स्कंदं नंदीश्वरं शूलं महाकालं च । ॐ यदक्रन्दः प्रथम ञ्जायमानऽउद्यन्त्सुमुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यं महिजाततेऽअर्व्वन् ॥ ॐ भू० स्कंद इहा० ॐ स्कंदाय नमः ॥ २१ ॥ तदुत्तरे० । ॐ आशुःशिशानोव्वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रंदनोनिमिषऽएकव्वीरः शतꣳ सेनाऽअजयत्साकमिन्द्रः ॥ ॐ भू० नंदीश्वर इहा० । ॐ नंदीश्वराय नमः ॥ २२ ॥ तत्रैव । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामिसमापोऽअ द्भिरग्मतसमोषधीभिरोषधीः ॥ ॐ भू० शूलमहाकालौ इहागच्छतमिह तिष्ठतम् । ॐ शूलमहाकाला भ्यां नमः ॥ २३ ॥ ब्रह्मेशानयोर्मध्ये दक्षादिप्रजापतीन् । ॐ प्रजापतेनत्वदेतान्न्यन्न्योव्विश्वारूपा

ग्र० णिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयठ्ठं स्यामपतयोरयीणाम् ॥ ॐ भू० प्रजापतय इह प्र०
गच्छंतु इह तिष्ठंतु । ॐ प्रजापतिभ्यो नमः ॥ २४ ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गाम् । ॐ अम्बेऽअम्बिकेअम्बालि
॥१९॥ केनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीम् ॥ ॐ भू० दुर्गे इहा० । ॐ दुर्गायै
नमः ॥ २५ ॥ दुर्गापूर्वे विष्णुम् । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा ᳪ
सुरे स्वाहा ॥ ॐ भू० विष्णो इहा० ॐ विष्णवे नमः ॥ २६ ॥ ब्रह्माग्न्योर्मध्ये पितॄन् । ॐ उदीर
तामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवंतुपितरोहवेषु ॥
ॐ भू० पितर इहा० । ॐ पितृभ्यो नमः ॥ २७ ॥ ब्रह्मयमयोर्मध्ये मृत्युरोगान् । ॐ परं मृत्योऽअ
नुपरेहिपंथांयस्ते अन्यइतरोदेवयानात् ॥ चक्षुष्मणेश्रृण्वतेते ब्रवीमिमानः प्रजा ᳪ रीरिषोमोतवी
रान् ॥ ॐ भू० मृत्युरोगा इहा० ॐ मृत्युरोगेभ्यो नमः ॥ २८ ॥ ब्रह्मनिर्ऋत्योर्मध्ये गणपतिम् । ॥१९॥
ॐ गणानात्वा० ॐ भू० गणपते इहा० । ॐ गणपतये नमः ॥ २९ ॥ ब्रह्मवरुणयोर्मध्ये अपः । ॐ
अपोऽअद्यान्वचारिषठ्ठं रसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासठ्ठंसृजवर्च्चसाप्रजयाचधने
नच ॥ ॐ भू० आप इहा० । ॐ अद्भ्यो नमः ॥ ३० ॥ ब्रह्मवायुमध्ये मरुतः । ॐ बृहदिन्द्रायगाय

तमरुतोवृत्रहंतमम् ॥ येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि ॥ ॐ भू० मरुत इहा० । ॐ मरु
द्भ्यो नमः ॥ ३१ ॥ ब्रह्मणः पादमूले पृथिवीम् । ॐ महीद्यौ पृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ॥
पिपृतान्नोभरीमभिः ॥ ॐ भू० पृथिवी इहा० । ॐ पृथि०यै नमः ॥ ३२ ॥ तत्रैव गङ्गादि
सरितः । ॐ इमम्मे गंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसत्तता परुष्णिया ॥ या ऽअसिक्नियाम
रुद्वृधे वितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ॐ भू० गंगादिसप्तसरित इहा० । ॐ गंगादिसरिद्भ्यो
नमः ॥ ३३ ॥ तत्रैव सप्तसागरान् ॥ ॐ आपोमौषधीर्हिंꣳसिधाम्नो धाम्नोराजँस्ततोव्वरुणनो
मुञ्च ॥ यदाहुरघ्न्याऽइति व्वरुणेतिशपामहेततोव्वरुणनोमुञ्च । ॐ भू० सप्तसागरा इहा० ॐ सप्त
सागरेभ्यो नमः ॥ ३४ ॥ तदुपरि मेरुं नाममंत्रेणावाहयेत । ॐ भूर्भुवः० मेरो इहा० ॐ मेरवे
नमः ॥ ३५ ॥ ततोमण्डलाद्बहिः सोमादिसन्निधौ क्रमेण आयुधानि स्थापयेत् । उत्तरे गदामावाहयामि
स्थापयामि ॐ भूर्भुवःस्वः गदे इहा० । ॐ गदायै नमः ॥ ३६ ॥ ईशान्याम् । त्रिशूलमा० । ॐ त्रिशू
लाय नमः ॥ ३७ ॥ पूर्वे वज्रमावा० ॐ वज्रायः नमः ॥ ३८ ॥ आग्नेय्याम् । शक्तिमा० ॐ शक्तये
नमः ॥ ३९ ॥ दक्षिणस्याम् । दंडमा० ॐ दंडाय नमः ॥ ४० ॥ नैर्ऋत्यां खड्गमा० ॐ खड्गाय

नमः ॥ ४१ ॥ पश्चिमे । पाशमावा० ॐ पाशाय नमः ॥ ४२ ॥ वायव्याम् । अंकुशमा०
ॐ अंकुशाय नमः ॥ ४३ ॥ तद्वाह्ये । उत्तरे ॐ गौतमाय नमः ॥ ४४ ॥ ईशान्याम्। ॐ
भारद्वाजाय नमः ॥ ४५ ॥ पूर्वे । ॐ विश्वामित्राय नमः ॥ ४६ ॥ आग्नेय्याम् । ॐ कश्य
पाय नमः ॥ ४७ ॥ दक्षिणे । ॐ जमदग्नये । नमः ॥ ४८ ॥ नैर्ऋत्याम् । ॐ वशिष्ठाय
नमः ॥ ४९ ॥ पश्चिमे । ॐ अत्रये नमः ॥ ५० ॥ वायव्याम् । ॐ अरुंधत्यै नमः ॥ ५१ ॥
तद्वाह्ये । पूर्वादिक्रमेण पूर्वे ॐ ऐन्द्र्यै नमः ॥ ५२ ॥ आग्नेय्याम् । ॐ कौमार्य्यै नमः ॥ ५३ ॥
दक्षिणस्याम् । ॐ ब्राह्म्यै नमः ॥ ५४ ॥ नैर्ऋत्याम् । ॐ वाराह्यै नमः ॥ ५५ ॥ पश्चिमायाम् ।
ॐ चामुण्डायै नमः ॥ ५६ ॥ वायव्याम् । ॐ वैष्णव्यै नमः ॥ ५७ ॥ उत्तरस्याम् । ॐ
माहेश्वर्य्यै नमः ॥ ५८ ॥ ईशान्याम् । ॐ वैनायक्यै नमः ॥ ५९ ॥ इत्यावाह्य । ॐ मनो
जूतिर्जुषतामिति प्रतिष्ठाप्य यथालब्धोपचारैः ॐ ब्रह्मादिसर्वतोभद्रमण्डलदेवताभ्यो नमः । इति
मंत्रेण पूजयेत् ॥ ततो वेदीमध्ये । ॐ महीद्यौरित्यादिपूर्वोक्तैर्वैदिकैर्मंत्रैस्ताम्रकलशं यथाविधि पूर्ण
पात्रांतं संस्थाप्य । तत्र ॐ तत्त्वायामीतिवरुणमावाह्य । ॐ अपांपतिवरुणाय नमः ॥ इति

संपूज्य । कलशस्य मुखे विष्णुरित्यभिमंत्र्य । देवदानवसंवादे० इत्यादि प्रार्थयेत् ॥ ततः कलशोपरि पट्टवस्त्रं प्रसार्य्य तदुपरि गंधाष्टकेन प्रधानदेवतायंत्रं विलिख्य तन्मध्ये कर्षेण तदर्द्धेन वा सुवर्णेन रचितां प्रधानदेवप्रतिमामग्न्युत्तारण पूर्वकं स्थापयेत् ॥ अथाग्न्युत्तारणम् ॥ तावत्साचार्यो यजमानः देशकालौ स्मृत्वा । ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमस्याः स्वर्णमय्यमुकदेवप्रतिमाया घटनादिदोषपरिहारार्थमग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये । इति संकल्प्य । मूर्तिं ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च पातयेत् । सूक्तवारद्वयं च पठेत् ॥ तत्र मंत्राः । ॐ समुद्रस्यत्वावकयाग्ने परिव्ययामसिपावकोऽस्मभ्यꣳशिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेप रिव्ययामसिपावकोऽअस्मभ्यꣳशिवो भव ॥ २ ॥ अपामिदन्न्वयनꣳ समुद्रस्यनिवेशनम् । अन्न्यास्ते अस्मत्तपन्तुहेतयः पावकोऽस्मभ्यꣳशिवोभव ॥ ३ ॥ नमस्तेहरसेशोचिषेनम स्तेऽ अस्त्वर्चिषे । अन्यास्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्य ꣳ शिवोभव ॥ ४ ॥ प्राणदा ऽअपानदाव्व्यानदाव्वर्चोदाव्वरिवोदाः । अन्यास्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्य ꣳ शिवो भव ॥ ५ ॥ इत्यग्न्युत्तारणमंत्राः अथ प्राणप्रतिष्ठा । अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा

ऋषयः ऋग्यजुः सामानि च्छदांसि क्रियामयवपुः प्राणाख्या देवताः आंबीजम् ह्रीं शक्तिः कीकीलकम्
अस्यां नूतनमूर्त्तौ प्राण प्रतिष्ठापने विनियोगः ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ मँ हों हँ सः १४ अस्या
अमुक देवप्रतिमायाः प्राणा इह प्राणाः । पुनः ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हों हँसः १४
अस्या अमुकदेवप्रतिमाया जीव इहस्थितः । पुनः ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हों हँ सः१४ अस्या
अमुकदेवताप्रतिमायाः सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवा
गत्यसुखंचिरं तिष्ठंतु स्वाहा । ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमन्त नोत्वरिष्ठंयज्ञठ्ँसमि
मंदधातुविश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ १ ॥ एषवैप्रतिष्ठानाम यज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेव
प्रतिष्ठितंभवति २ इति प्रतिष्ठाप्य संस्कारसिद्धये पंचदशप्रणवावृत्तीः कृत्वा षोडशोपचारैः पूजयेत्
( तत्र विष्णु पुरुषसूक्तेन । शिवं त्र्यंबकमंत्रेण पंचाक्षरेण वा । गणपतिं गणानांत्वेतिमंत्रेण देवीं श्री
सूक्तेन सूर्य्यं पुरुषसूक्तेन च षोडशोपचारैः पूजयेत् । सर्वेषां व पुरुषसूक्तेन पूजाकरणं ) तत्रादौ
स्वशरीरेदेवाङ्गे च पुरुषसूक्तन्यासं कुर्यात् " देवो भूत्वा देवं यजेत् " इति वाक्यात् ॥ अथाङ्गन्यासः ।
सहस्रशीर्षेत्यादिषोडशर्चसूक्तस्य नारायण ऋषिः पुरुषो देवता । अनुष्टुप्छंदः । अंत्यायास्त्रिष्टुप्छन्दः ।

प्र०
॥२१॥

न्यासे पूजायां च विनियोगः । ॐ सहस्रशीर्षा० इति वामकरे १ ॐ पुरुषऽएवेदꣳ इतिदक्षिणकरे २ ॐ एतावानस्य० इति वामपादे ३ ॐ त्रिपादूर्ध्व० इति दक्षिणपादे ४ ॐ ततोव्विराट्० इति वामजानुनि ५ ॐ तस्माद्यज्ञात्सर्वहुतः० इति दक्षिणजानुनि ६ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० इति वामकटौ ७ ॐ तस्मादश्वा० इति दक्षिणकटौ ८ ॐ तंयज्ञं० इति नाभौ९ॐ यत्पुरुषं० इति हृदये०१० ॐब्राह्मणोस्य इति कंठे११ॐ चंद्रमामनसो० इति वामबाहौ१२ॐ नाभ्याऽआसित्० इति दक्षिणबाहौ १३ ॐ यत्पुरुषेण० इतिमुखे१४सप्तास्यासन्०इतिनेत्रयोः १५ ॐ यज्ञेनयज्ञमय० इतिमूर्ध्नि१६अथपंचांगन्यासः । ॐ अद्भ्यः संभृतइति हृदये १ ॐ व्वेदाहमेतम्० इति शिरसि २ ॐ प्रजापतिश्च० इति शिखायै वषट् ३ ॐ योदेवेभ्यऽआतपति० इति कवचायहुम् ४ ॐ रुचम्ब्राह्मं० इत्यस्त्रायफट् ५ एवं न्यासं कृत्वा आचम्य कलशं शंखघंटे च संपूज्य देवं ध्यायन् घंटानादं कृत्वा पूजां कुर्यात् ॥ अथ सर्वदेवोपयोगिषोडशोपचारपूजाप्रयोगः ॥ आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर । अरण्यामिवहव्यांशं मूर्तावावाहयाम्यहम् ॥ १ ॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्व्वतस्पृत्वात्यतिष्ठद्दशांगुलम् १ ॐ भूर्भुवः स्वः अमुकदेवमावाहयामि । इत्यावाहनम् ॥ १ ॥ देवदेव महाराज प्रियेश्वर प्रजा

पते ॥ आंसनं दिव्यमीशान दास्येहं परमेश्वर ॥ १ ॥ ॐ पुरुषऽएवेदꣳ सर्वंयद्भूतंयच्चभाव्यम् ॥
उतामृतत्वस्येशानोयदन्नेनातिरोहति ॐ भू० अमुकदेवाय नमः इदमासनम् । इत्यासनम् ॥ २ ॥ ( दे
वीपूजायां स्त्रीलिंगेनोच्चारणं कार्य्यम् ) यद्भक्तिलेशसंपर्कात्परमानंदविग्रहम् । तस्मै ते चरणा
ब्जाय पाद्यं शुद्धाय कल्पये ॥ १ ॥ ॐ एतावानस्यमहिमातोज्यायांश्चपूरुषः । पादोस्यव्विश्वा
भूतानित्रिपादस्यामृतंदिवि । ॐ भू० अमुकदेवाय नमः पादयोः पाद्यं समर्पयामि । इति पाद्यम् ॥ ३ ॥
तापत्रयहरं दिव्यं परमानंदलक्षणम् । तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥ १ ॥ ॐ त्रिपादू
र्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः । ततोव्विष्वङ् व्व्यक्रामत्साशनानशनेऽअभि । ॐ भू० अमुक
देवाय नमः इदमर्घ्यं० । इत्यर्घ्यम् ॥ ४ ॥ वेदानामपि वेद्याय देवानां देवतात्मने । आचामं
कल्पयामीश शुद्धानां शुद्धिहेतवे ॥ १ ॥ ॐ ततोव्विराडजायतव्विराजोऽअधिपूरुषः । सजातो
अत्यरिच्च्यतपश्चाद्भूमिमथोपुरः । ॐ भू० अमुकदेवाय० आचमनीयं० ॥ इत्याचमनम् ॥ ५ ॥ गंगा
सरस्वतीरेवापयोष्णीनर्मदाजलैः ॥ स्नापितोसि मया देव तथा शांतिं कुरुष्व मे ॥ १ ॥ ॐ तस्मा
यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्यम् । पशूँस्तांश्चक्रेवायव्व्यानारण्याग्ग्राम्याश्चये । ॐ भू० अमुकदेवा

य० स्नानंसम० ॥ इतिस्नानम् ॥ ६ ॥ अथपयस्स्नानम् । कामधेनुसमुत्पन्नं सर्वेषां जीवनंपरम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् । ॐ पयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः पयस्व तीःप्प्रदिशःसन्तुमह्यम् । ॐ भू० अमुकदेवाय० पयस्स्नानंसः० ॥ १ ॥ दधिस्नानम् । पयसस्तु समु द्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् । ॐ दधिक्राव्णोऽअकारि षञ्जिष्णोरश्वस्यव्वाजिनः । सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् । ॐ भू० अमुकदेवाय० दधि स्नानंस० ॥ २ ॥ घृतस्नानम् । नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् । ॐ कृतंघृतपावानः पिबतवसाम्वसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा दिशःप्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ ॐ ॥ भू० अमुकदेवाय० घृतस्नानं० ॥ ३ ॥ ( मधुस्नानम् ) तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तिसिंधवः । माध्वीर्न्नः सन्त्वोषधीः ॥ १ ॥ ॐ मधुनक्तमुतोषसोमधुम त्पार्थिवꣳरजः । मधुद्यौरस्तुनः पिता ॥ २ ॥ ॐ मधुमान्नोव्वनस्पतिर्म्मधुमाँ ॥ २ ॥ऽअस्तुसूर्य्यः । मा ध्वीर्गावोभवंतुनः ॥ ३ ॥ ॐ भू० अमुकदेवाय० मधुस्नानं स० ॥ ४ ॥ ( शर्करोदकस्नानम् ) इक्षुसा

रसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् । ॐ अपा७ँरसमुद्व
यसठँ्सूर्येसन्तठँ्समाहितम् । अपा७ँरसस्ययोरसस्तंव्वोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णा
म्येषतेयोनिरिन्द्रामत्वाजुष्टतम् ॥ ॐ भू० अमुकदेवाय० शर्करोदकस्नानं समर्पयामि ॥ ५ ॥ ( पंचा
मृतस्नानम् ) पयो दधि घृतं चैव मधु च शर्करायुतम् । पंचामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ।
ॐ पंचनद्यः सरस्वतीमपियन्तिसस्रोतसः । सरस्वतीतुपंचधासोदेशेभवत्सरित् । ॐ भू० अमुकदेवाय
नमः पंचामृतस्नानं समर्पयामि ॥ ६ ॥ ॐ व्वरुणस्योत्तंभनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽ
ऋत सदन्यसि । व्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद । ॐ भू० अमुकदेवाय०
शुद्धोदकस्नानं स० । इति शुद्धोदकस्नानम् ॥ ७ ॥ ( अथाभिषेकः ) शिवसूर्यातिरिक्तदेवेषु
शंखेनाभिषेकं कुर्यात् ) ॐ सहस्रशीर्षा० १ पुरुषऽएवे० २ एतावान० ३ त्रिपादूर्ध्व० ४ ततोविव
राड० ५ तस्माद्यज्ञात्स० ६ तस्माद्यज्ञात्सर्व्वहुत० ७ तस्मादश्वाऽअजायन्त० ८ तंयज्ञम्बर्हि
षि० ९ यत्पुरुषं० १० ब्राह्मणोस्य० ११ चन्द्रमामनसो० १२ नाभ्याऽआसीद० १३ यत्पुरुषेण०
१४ सप्तास्या० १५ यज्ञेनयज्ञ० १६ एवं पुरुषसूक्तेन तत्तन्नाममंत्रेण वा यथाशक्ति अभिषेकं

कृत्वा आमचनं दद्यात् ॥ ( वस्त्रम् ) सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ॥ मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानियज्ञिरे । छंदा ᳪ सिय ज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ॐ अमुकदेवाय० वस्त्रयुग्मं स० । आचमनं च समर्पयामि ॥ ७ ॥ ( पीतं विष्णा सितं शंभौ रक्तं विघ्नार्कशक्तिषु । सच्छिद्रं मलिनं जीर्णं त्यजेत्तैलादिदूषितम् ) ( यज्ञोपवीतम् ) नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं चोत्तरीयं गृहाण परमेश्वर ॥ ॐ तस्मादश्वाऽअजायन्तयेकेचोभयादतः । गावो हयज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ॐ भू० अमुकदेवाय० यज्ञोपवीतं स० ॥ ८ ॥ ( आचमनम् ) ( गंधम् ) श्रीखंड चन्दनं दिव्यं गंधाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यताम् । ॐ तंयज्ञम्बर्हिषिप्रौक्षन्न्पुरुषञ्जातमग्रतः । तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये । ॐ अमुकदेवाय० गंधं स० ॥ ९ ॥ ( अंगुष्ठौ कनिष्ठामूललग्नौ गन्धमुद्रा ) ( अक्षतान् ) अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर । ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत । अस्तोषतस्वभानवोव्विप्रानविष्ठयामतीयोजान्विन्द्रतेहरी । ॐ भू० अमुकदेवाय० अक्षतान् स० ॥ १० ॥ ( पुष्पाणि ) माल्यादीनि सुगंधीनि मालत्यादीनि

वै प्रभो । मयानीतानि पुष्पाणि गृहाण परमेश्वर । ॐ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ।
मुखंकिमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते ॥ अमुकदेवाय पुष्पाणि स० ॥ ११ ॥ ( विष्णवे
तुलसी शिवायबिल्पत्रं गणेशाय दूर्वांकुरान् देव्यै सुरभिपुष्पाणि सूर्य्याय अर्कपुष्पाणि चार्प
येत् ) ( तर्जन्यंगुष्ठयोगेनपत्रमुद्रा ) ( अत्रावसरेतत्तदुद्यापनकल्पोक्तामावरणदेवतापूजां कृत्वा
धूपादिनिवेदनं कार्य्यम् ) अथधूपम् ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंध उत्तमः । आघ्रेयः सर्वदेवा
नां धूपोयं प्रतिगृह्यताम् । ॐ ब्राह्मणोस्यमुखमासीद्बाहू राजन्यःकृतः । ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽ
अजायत ॥ ॐ अमुकदेवाय० सांगाय० धूपंसमर्पयामि ॥ १२ ॥ ( तर्जनीमूलयोरंगुष्ठ
योगेन धूपमुद्रा ) ॥ दीपम् ॥ सुप्रकाशो महादीपः सर्वतस्तिमिरापहः । स बाह्याभ्यंतरं ज्योति
र्दीपोयं प्रतिगृह्यताम् ॥ ॐ चंद्रमामनसोजातश्चक्षोः सूर्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्च मुखादग्नि
रजायत ॥ ॐ भू० अमुकदेवाय० सांगाय० दीपं स० ॥ १३ ॥ ( मध्यमांगुष्ठयोगेन दीपमुद्रा )
अथ नैवेद्यम् ॥ ( ततः स्वर्णादिभाजने देवताग्रे देवदक्षिणतो वा साज्यं सशर्करं पायसादि
नैवेद्यं परिवेष्य ) सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् । निवेदयामि देवेश सानुगाय गृहाण तत् ॥

ॐ नाभ्याऽआसीदन्तरिक्षᳪशीर्ष्णोद्यौः समवर्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ ॥ऽ अकल्पयन् ॥ ॐ भू० सांगायामुकदेवाय नमः । इदं नैवेद्यं समर्पयामि । इति पठित्वा भूतले देव दक्षिणे जलं क्षिप्त्वा नैवेद्यमुद्रां प्रदर्शयेत् ( अनामामूलयोरंगुष्ठयोगेन नैवेद्यमुद्रा ) ॥ १४ ॥ ततः । समस्तदेवदेवेश सर्वतृप्तिकरं परम् ॥ अखंडानंदसंपूर्ण गृहाणजलमुत्तमम् ॥ १ ॥ इत्याचमनं दद्यात् ॥ ( तांबूलम् ) पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलाचूर्णादिसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥ ॐ अमुकदेवाय० तांबूलं स० ॥ १ ॥ ( ऋतुफलम् ) ॥ इदंफलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि । ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृह स्पतिप्रसूतास्तानोमुञ्चन्त्वᳪहसः ॥ ॐ भू० अमुकदेवाय० फलंस० ॥ १५ ॥ ( दक्षिणा ) हिर ण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शांतिं प्रयच्छमे । ॐ हिरण्यगर्भः सम वर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् । सदाधारपृथिवींद्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ ॐ भू० अ मुकदेवाय दक्षिणां० । इति नारिकेलसहितां दक्षिणां समर्पयेत् ॥ १६ ॥ ( कर्पूरार्तिक्यम् ) कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् । आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥ ॐ इदᳪहविः

प्रजननम्मेऽअस्तुदशवीर ॐसर्व्वगण१ंस्वस्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्न्यभयसनि अग्निःप्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥ ॐ भू० अमुकदेवाय नमः कर्पूरार्तिक्यं प्रदर्शयामि ॥ इति यथाचारं नीराजनं कुर्यात् ॥ १७ ॥ ( प्रदक्षिणा ) यानि कानि च पापानि जन्मांतरकृतानि च । तानि सर्वाणि नश्यंतु प्रदक्षिणपदेपदे ॥ ॐ सप्तास्यासन्परिधयस्त्रिःसप्तस मिधःकृताः । देवायज्ञन्तन्न्वानाऽअबध्नन्न्पुरुषम्पशुम् ॥ ॐ अमुकदेवाय० प्रदक्षिणां समर्पयामि ॥ १८ ॥ ( इति विष्णौ चतस्रः प्रदक्षिणाः ४ शिवे तिस्रः ३ ॥ दुर्गायामेका १ गणेशे तिस्रः ३ रवौ सप्त ७ प्रदक्षिणाः कार्याः ) ततो नानापत्रपुष्पैः पुष्पांजलिः । सेवन्तिकाबकुलचंपकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमंजरीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद । ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्न्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ ॐ अमुकदेवाय० पुष्पांजलिं समर्पयामि ॥ १९ ॥ ( प्रणामः ) ॐ नमः सर्वहितार्थाय जगदाधारहेतवे ॥ साष्टांगोयं प्रणामस्ते दीनत्वेन मया कृतः ॥ २० ॥ इति साष्टांगं प्रणम्य विशेषार्घ्यं दद्यात् ॥ ताम्रपात्रे जलगंधाक्षतपुष्पाणि फलं हिरण्यं नारिकेलं च गृहीत्वा

 

जानुभ्यां धरिणीं गत्वा । ॐ नारायण जगन्नाथ लक्ष्मीकान्त दयानिधे ॥ गृहाणार्घ्यं मया दत्तं व्रतसंपूर्तिहेतवे ॥ १ ॥ इत्यर्घ्यं दत्त्वा । यन्मया भक्तियुक्तेन पत्रं पुष्पं फलं जलम् ॥ प्रकल्पितं च नैवेद्यं तद्गृहाण जगत्पते ॥ २१ ॥ इति देवाय निवेदयेत् ॥ ततो ब्राह्मणान्संपूज्य गीतशास्त्रपुराण कथाश्रवणादिना जागरपूर्वकं रात्रिं निनयेत् ॥ ततःप्रातः आचार्यो यजमानश्च नित्यकर्म समाप्य पूर्वाऽऽवाहितमंडलदेवताः पंचोपचारैः संपूज्य होमं कुर्यात ( न रात्रौ होमः पूर्वाह्ण एव देवानां कालत्वात् ) अथ शिवव्रतोद्यापनेषु लिंगतोभद्रपूजाप्रयोगः ॥ आचम्य । प्राणानायम्य देशकालौ संकीर्त्य । अद्यामुकशिवव्रतोद्यापनकर्मणि श्रीभवानीशंकरप्रीत्यर्थम् एतद्द्वादशलिंगतोभद्रमंडले देवतावाहनं प्रतिष्ठापूजनं च करिष्ये इति संकल्प्य पुष्पाक्षतानादाय मण्डलबाह्ये ईशानकोणे ॐ गुरवे नमः गुरुमावाहयामिस्थापयामि १ ( एवं सर्वत्र ) अग्नेय्याम् ॐ गणपतये नमः २ नैर्ऋत्यां ॐ दुर्गायै नमः ३ वायव्याम् ॐ क्षेत्रपालाय नमः ४ ( ततो भद्रमध्ये ) ॐ सदाशिवाय नमः ५ ( अष्टदले ) पूर्वस्यां दिशि ॐ कालाग्निरुद्राय नमः ६ ॐ कूर्माय नमः ७ ॐ मंडूकाय नमः ८ ( आग्नेय्याम् ) ॐ वाराहाय नमः ९ ॐ अनंताय नमः १० ( दक्षिणे ) ॐ पृथिव्यै नमः ११ ॐ स्कंदाय नमः १२ ॐ सुधासिं

धवे नमः १३ ( नैर्ऋत्याम् ) ॐ नलाय० १४ पद्माय० १५ ( पश्चिमे ) ॐ पत्रेभ्यो० १६ ॐ केसरेभ्यो० १७ ॐ कर्णिकायै० १८ ( वायव्याम् ) ॐ सिंहाय नमः १९ ॐ पद्मासनाय० २० ( उत्तरे ) ॐ धर्माय० २१ ज्ञानाय० २२ ॐ वैराग्याय० २३ ( ऐशान्याम् ) ॐ ऐश्वर्याय० २४ ॐ चिदाकाशाय० २५ ( पद्ममध्ये ) ॐ योगपीठात्मने० २६ ( कर्णिकोपरि ) पूर्वे ॐ पृथिव्यै०२७ दक्षिणे ॐ कपालाय० २८ पश्चिमे ॐ सप्तसरिद्भ्य० २९ उत्तरे ॐ सप्तसागरेभ्य० ३० कर्णिका समीपे चत्वारि श्वेतभद्राणि तद्देवतास्थापनम् ॥ पूर्वे ॐ तत्पुरुषाय० ३१ दक्षिणे ॐ अघोराय० ३२ पश्चिमे ॐ सद्योजाताय० ३३ उत्तरे ॐ वामदेवाय० ३४ ( अथ तत्समीपे कृष्णानि अष्टौ भद्राणि तद्देवतास्थापनम् ऐशान्यादिक्रमेण ) ऐशान्ये० ॐ भगवत्यै० ३५ पूर्वे ॐ उमायै० आग्नेय्याम् ॐ शंकरप्रियायै० ३६ दक्षिणे ॐ पार्वत्यै ३७ नैर्ऋत्ये ॐ गौर्यै० ३८ पश्चिमे ॐ काल्यै ३९ वायव्याम् ॐ कौम्यैं० ४९ उत्तरे ॐ विश्वंभर्यै० ४१ ततः कृष्णभद्राणामधः अष्टौ रक्तभद्राणि तद्देवतास्थापनम् । ऐसान्याम् ॐ नंदिने नमः ४२ पूर्वे ॐ महाकालाय० ४३ आग्नेय्याम ॐ वृषभाय० ४४ दक्षिणे ॐ भृङ्गरीटिने० ४५ नैर्ऋत्याम् ॐ स्कंदाय० ४६ पश्चिमे ॐ उमा

पतये० ४७ वायव्याम् ॐ चंडेश्वराय० ४८ उत्तरे ॐ सोमसूत्राय० ४९ अथ लिंगोपरि चत्वारि श्वेतभद्राणि तद्देवतास्थापनम् । पूर्वे ॐ धात्रे नमः ५० दक्षिणे ॐ मित्राय० ५१ पश्चिमे ॐ यमाय० ५२ उत्तरे ॐ रुद्राय० ५३ ततस्तत्समीपे लिंगोपरि अष्टौ पीतभद्राणि तद्देवतास्थापनम् । ऐशान्याम् ॐ वरुणाय० ५४ पूर्वे ॐ सूर्य्याय० ५५ आग्नेय्याम् ॐ भगाय० ५६ दक्षिणे ॐ विवस्वते० ५७ नैर्ऋते ॐ पुरुषोत्तमाय ५८ पश्चिमे ॐ सवित्रे० ५९ वायव्याम् ॐ त्वष्ट्रे नमः ६० उत्तरे ॐ विष्णवे नमः ६१ ततो द्वादशलिंगदेवतास्थापनं पूर्वादिक्रमेण । ( पूर्वे ) ॐ शिवाय० ६२ ॐ एकनेत्राय० ६३ ॐ एकरुद्राय० ६४ (दक्षिणे) ॐ त्रिमूर्तये०६५ ॐ श्रीकंण्ठाय ६६ ॐ वामदेवाय०६७ ( पश्चिमे ) ॐ ज्येष्ठाय० ६८ ॐ श्रेष्ठाय० ६९ ॐ रुद्राय० ॥ ७० ( ऊत्तरे ) ॐ कालाय० ७१ ॐ कलविकर्णाय० ७२ ॐ बलविकर्णाय० ७३ अथ श्वेतशोडशवापीदेवतास्थापनम् । ईशान्यादिक्रमेण । ॐ अणिमायै० ७४ ॐ महिमायै० ७५ ॐ लघिमायै० ७६ ॐ गरिमायै० ७७ ॐ प्राप्त्यै० ७८ ॐ प्राकाम्यायै० ७९ ॐ ईशितायै० ८० ॐ वशितायै० ८१ पुनः ईशानादिक्रमेण । ॐ ब्राह्म्यै० ८२ ॐ माहेश्वर्य्यै० ८३ ॐ कौमार्यै० ८४ ॐ वैष्णव्यै० ८५ ॐ वाराह्यै० ८६ ॐ इन्द्राण्यै० ८७

ॐ चामुंडायै० ८८ ॐ चंडिकायै ८९ ततः वापीसमीपे अष्टौ रक्तभद्राणि तद्देवतास्थापनम् ॥ ईशानादिक्रमेण ॥ ॐ असितांगभैरवाय० ९० ॐ रुरुभैरवाय० ९१ ॐ चण्डभैरवाय० ९२ ॐक्रोधभैरवाय० ९३ ॐ उन्मत्तभैरवाय० ९४ ॐ कालभैरवाय० ९५ ॐ भीषणभैरवाय० ९६ ॐ संहारभैरवाय० ९७ अथाष्टवल्लीदेवतास्थापनम् ॥ ईशानादिक्रमेण ॥ ॐ घृताच्यै० ९८ ॐ मेनकायै० ९९ ॐ रंभायै० १०० ॐ उर्वश्यै० १०१ ॐ तिलोत्तमायै० १०२ ॐ सुकेश्यै० १०३ ॐ मंजुघोषायै० १०४ ॐ अप्सरायै० १०५ ततो मंडलमध्ये परिधिसमीपे शृङ्खलादेवतास्थापनम् ॥ आग्नेय्यादिक्रमेण ॥ ॐ भवाय० १०६ ॐ शिवाय० १०७ ॐ रुद्राय० १०८ ॐ पशुपतये० १०९ ॐ उग्राय० ११० ॐ महादेवाय० १११ ॐ भीमाय० ११२ ॐ ईशानाय० ११३ ॐ अनंताय० ११४ ॐ वासुकये० ११५ ततो नैर्ऋत्यपरिधिसमीपे शृंखलादेवताः ॥ ॐ तक्षकाय० ११६ ॐ कुरलीरकाय० ११७ ॐ कर्कोटकाय० ११८ ॐ शंखपालाय० ११९ ॐ कंबलाय० १२० ॐ अश्वतराय० १२१ ॐ वैन्याय० १२२ ॐ अंगाय० १२३ ॐ हैहयाय० १२४ ॐ अर्जुनाय० १२५ ततो वायव्ये दश शृंखलादेवताः ॥ ॐ शाकुंतलाय० १२६ ॐ भरताय० १२७ ॐ नलाय० १२८ ॐ रामाय० १२९

प्र० ॥२७॥

ॐ सार्वभौमाय० १३० ॐ निषधाय० १३१ ॐ विंध्याचलाय० १३२ ॐ माल्यवते० १३३ ॐ पारियात्राय० १३४ ॐ सह्याय १३५ ततः ईशान्यपरिधिसमीपे दश शृंखलादेवताः ॥ ॐ हेमकूटाय० १३६ ॐ गंधमादनाय० १३७ ॐ कुलाचलाय० १३८ ॐ हिमवते० १३९ ॐ रैवताचलाय० १४० ॐ देवगिरये० १४१ ॐ मलयाचलाय० १४२ ॐ कनकाचलाय० १४३ ॐ पृथिव्यै० १४४ ॐ अनंताय० १४५ अथ चतुर्दिक्षु खंडेन्दुदेवतास्थापनम् ॥ ईशान्यादिक्रमेण ॥ ऐशान्याम् । ॐ अश्विनीकुमाराभ्यां १४६ आग्नेय्याम् ॐ विश्वेभ्योदेवेभ्यो० १४७ नैर्ऋत्याम् ॐ पितृभ्यो० १४८ वायव्याम् ॐ नागेभ्यो० १४९ ततो मंडलाद्बहिः प्रथमं सत्त्वपरिधौ पूर्वादिक्रमेण देवताः । ॐ इंद्राय० १५० ॐ अग्नये १५१ ॐ यमाय० १५२ ॐ निर्ऋतये० १५३ ॐ वरुणाय० १५४ ॐ वायवे० १५५ ॐ कुबेराय० १५६ ॐ ईशानाय० १५७ ( इंद्रेशानयोर्मध्ये ) ॐ ब्रह्मणे नमः १५८ ( वरुणनिर्ऋत्योर्मध्ये ) ॐ अनंताय० १५९ तद्बहिः रजःपरिधौ पूर्वादिक्रमेण देवताः । ॐ वज्राय० १६० ॐ शक्तये० १६१ ॐ दंडाय० १६२ ॐ खड्गाय० १६३ ॐ पाशाय० १६४ ॐ अंकुशाय० १६५ ॐ गदायै० १६६ ॐ त्रिशूलाय०

१६७ ॐ पद्माय० १६८ ॐ चक्राय० १७९ तद्बहिस्तमोमयकृष्णपरिधौ पूर्वादिक्रमेण देवताः । ॐ कश्यपाय० १७० ॐ अत्रये० १७१ ॐ भरद्वाजाय० १७२ ॐ विश्वामित्राय० १७३ ॐ गौतमाय० १७४ ॐ जमदग्नये० १७५ ॐ वसिष्ठाय० १७६ ॐ अरुंधत्यै० १७७ ( ततः पूर्वे ) ॐ ऋग्वेदाय० १७८ दक्षिणे ॐ यजुर्वेदाय० १७९ पश्चिमे ॐ सामवेदाय० १८० उत्तरे ॐ अथर्ववेदाय० १८१ एवं देवताः संस्थाप्य ॐ मनोजूतिरिति पुष्पाणि विकीर्य । ॐ द्वादशलिंगतोभद्रमंडलदेवताभ्यो नमइति षोडशोपचारैः संपूज्य प्रणमेत् ॥ ततो मंडलमध्येमहीद्यौरिति पूर्वोक्तैर्मंत्रैस्ताम्रकलशं पूर्णपात्र निधानांतं पूर्ववत्संस्थाप्य तत्र वरुणमावाह्य संपूज्य तदुपरि प्रधानदेवशिवप्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य पुरुषसूक्तेन संपूज्य रुद्राध्यायोक्तषोडशमंत्रैः प्रार्थयेत् ॥ इति रुद्रयामलोक्तद्वादशलिंगतो भद्रमंडलपूजाप्रयोगः ॥ अथशिवव्रतेषु देवीव्रतेषु साधारणतया एकलिंगतोभद्रादिसर्वमंडलदेवतापूजनप्रयोगः ॥ देशकालौ संकीर्त्य । मया पूर्वाचरितस्य अमुकव्रतस्य उद्यापनकर्मणि श्रीभवानीशंकर प्रीतये अस्मिन् लिंगतोभद्रमंडले यथोक्तदेवतास्थापनमहंकरिष्ये । इति संकल्प्य । पुष्पाक्षतान् गृहीत्वा । ब्रह्मादिदेवान् ( पूर्वोक्तसर्वतोभद्रदेवतानां वैदिकैर्मंत्रैः ) प्रणवाद्यैर्नाममंत्रैर्वा स्थापयेत् ॥

तद्यथा ( मध्ये ) ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि १ ( एवंसर्वत्र ) (पूर्वे) ॐ इंद्रायनमः २ ( आग्नेय्याम् ) ॐ अग्नये० ३ ( दक्षिणे ) ॐ यमाय० ४(नैर्ऋत्याम्)ॐ निर्ऋतये० ५(पश्चिमे)ॐवरुणाय० ६ ( वायव्याम् ) ॐ वायवे० ७( उत्तरे ) ॐकुबेराय० ८ ( ऐशान्याम् ) ॐ ईशानाय० ९ ( ईशानपूर्वयोर्मध्ये ) ॐ अष्टवसुभ्यो नमः १० ( इंद्राग्न्योर्मध्ये ) ॐ एकादशरुद्रेभ्यो० ११ ( अग्नियमयोर्मध्ये ) ॐ द्वादशादित्येभ्यो० १२ यमनिर्ऋत्योर्मध्ये ॐ अश्विभ्यां नमः १३ निर्ऋतिवरुणयोर्मध्ये ॐ विश्वेभ्यो देवेभ्यो नमः। तत्रैव ॐ पितृभ्यो नमः १४ वरुणवाय्वोर्मध्ये ॐ नागेभ्यो० १५ वायूत्तरयोर्मध्ये ॐ स्कंदाय० १६ उत्तरेशानयोर्मध्ये ॐ वृषभायनमः१७ ततः ईशानादिदलेषु ॐ दक्षाय नमः १८ ॐ विष्णवेनमः १९ ॐ दुर्गायै०२०ॐ स्वधायै०२१ ॐ मृत्युरोगेभ्यो नमः २२ ॐ समुद्रेभ्यो नमः २३ ॐ सरिद्भ्यो नमः २४ ॐ मरुद्भ्यो नमः २५ ॐ गणपतये नमः २६ ( मध्ये ) ॐ पृथिव्यै नमः२७तदुपरि ॐ मेरवे नमः २८ तदुपरि प्रधानदेवपीठाय नमः २९ ततो मंडलाद्बहिः ईशानादिक्रमेण। ॐ त्रिशूलायनमः ३० ॐ वज्राय० ३१ ॐ शक्तये० ३२ ॐ दंडाय०३३ॐखड्गाय०३४ॐ पाशाय० ३५ ॐ अंकुशाय० ३६ ॐ गदायै० ३७ पुनः ईशानादिक्रमेण ॐ वृषभाय नमः ३८ ॐ ऐरावताय० ३९

ॐ मेषाय० ॐ महिषाय० ४१ प्रेताय० ४२ ॐ मकराय० ४३ ॐ मृगाय० ४४ ॐ हिरण्याय०४५ पुनः ईशानादिक्रमेण ॐ अरुंधत्यै नमः ४६ ॐ गौतमाय० ४७ ॐ अत्रये० ४८ ॐ भरद्वाजाय० ४९ ॐ विश्वामित्राय० ५० ॐ कश्यपाय० ५१ ॐ जमदग्नये० ५२ ॐ वसिष्ठाय०५३ पुनः ईशानादिक्रमेण ॐ आदित्याय नमः ५४ ॐ सोमाय नमः ५५ ॐ भौमाय नमः ५६ ॐ बुधाय नमः ५७ ॐ बृहस्पतये नमः ५८ ॐ शुक्राय नमः ५९ ॐ शनैश्चराय नमः ६० ॐ राहवे नमः ६१ ( मंडलमध्ये ) ॐ केतवे नमः ६२ पुनः ईशानादिक्रमेण । ॐ वैनायक्यै० ६३ ॐ ॐ ऐंद्र्यै नमः ६४ ॐ कौमार्यै नमः ६५ ॐ ब्राह्म्यै नमः ६६ ॐ वाराह्यै नमः ६७ ॐ चामुंडायै नमः ६८ ॐ वैष्णव्यै नमः ६९ ॐ माहेश्वर्य्यै नमः ७० एवं सप्तति ७० मंडलदेवताः संस्थाप्य षोडशोपचारैः पूजयेत् ॥ इत्येकलिंगतोभद्रादिपंचविंशतिलिंगयोभद्रान्तमंडलदेवतापूजनप्रयोगः ॥ गणपतिसूर्यादिसर्वदेवताव्रतोद्यापनेषु पूर्वोक्तसर्वतोभद्रमंडलपूजनं कार्य्यम् ॥ अथ होमविधानम् ॥ तत्रादौ कुशकण्डिका ॥ साचार्यो यजमानः प्रातर्नित्य कर्म कृत्वा स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य । मया पूर्वाचरितस्य अमुकव्रतस्य सांगतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं तदंगभूतं विहितहवनंकरिष्ये इति संकल्प्य

अग्न्यायतनस्य समंताद् ऐशानीं दिशमारभ्य प्रदक्षिणं सोदकेन पाणिना त्रिः परिमृज्य पात्रासादनं कुर्यात् । तद्यथा । आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे कुशाद्यासनं दत्त्वातदुपरि प्राग ग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अस्मिन्नमुकव्रतोद्यापनहोमकर्मणि त्वं मे ब्रह्मा भव इत्यभिधाय वरणकर्म्मणापूर्वसंपादितं ब्राह्मणं तदभावे पंचाशत्कुशनिर्मितं कल्पितासने उप वेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणापूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ( परिस्तरणम् ) बर्हिषश्चतुर्थभागमादाय चतुर्भिश्चतुर्भिर्दर्भैरुत्त राग्रैः प्राच्याम् १ प्रागग्रैर्दक्षिणस्याम् २ उदग्रैः प्रतीच्याम् ३ पुनः प्रागग्रैरग्नितः उदीच्याम् ४ परिस्तरणं कुर्य्यात् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं पवित्रे साग्रे अंनतर्गर्भे द्वेकुशपत्रे २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ चरुस्थाली १ संमार्जनकुशाः पंच ५ उपयमनकुशाःसप्त ७ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः ३ स्रुवः खादिरो हस्तमात्रः १ आज्यं गव्यम् ॥ चर्वर्थास्तंडुलाः ॥ तिलादिहोमद्रव्यम् ॥ पूर्णपात्रम् १ दक्षिणा वरो वा ॥ पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयम् ॥ ततः पवित्रच्छेदनम् ॥ पवित्र

करणम् ॥ द्वयोः पवित्रयोरुपरि पवित्रत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वेकुश तृणे प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ॥ ततः सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिभिरुत्पवनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्ते करणम्--अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनम् ॥ ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् ॥ प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यंतानि क्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योरंतराले प्रोक्षणीपात्रं निधाय आसादितमाज्यं पश्चादग्नेर्निहितायामाज्यस्थाल्यां प्रक्षिप्य चरुस्थाल्यां प्रणीतोदकमासिच्य आसादितांस्तंडुलान्प्रक्षिप्य ततः आज्यं ब्रह्माऽधिश्रयति ॥ तदुत्तरतः स्वयं चरुमेव युगपदग्नावारोप्य ईषच्छृते चरौ ज्वलत्तृणोल्मुकं प्रदक्षिणम् आज्यचर्वोः समंताद्भ्रामयेत् ॥ ततो दक्षिणपाणिना स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोग्रपर्य्यंतं मूलैरग्रमारभ्य अधस्तान्मूलपर्य्यंतं संमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतो निदध्यात् ॥ ततः आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वाज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः

पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निदध्यात् ॥ ततः पूर्वपवित्राभ्यामाज्यमुत्पूय अवलोक्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम् ॥ तत उपयमनकुशानादाय उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य प्रोक्षण्युदकेन सपवित्रेणाग्नि मीशानाद्युदक्पर्यंतं परिषिच्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः यजमानेनान्वारब्धश्च समिद्धतमे ग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ ( तत्राघारावाज्यभागादिषु स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । ततो यजमानेन द्रव्यत्यागः कार्यः ॥ सर्वत्र यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात् ) देशकालौ संकीर्त्य अस्मिन्नमुकव्रतोद्यापनहोमकर्मणि इदं संपादितं चरुतिलाज्यहविर्द्रव्यं याया वक्ष्यमाणदेवतास्तस्यैतस्यै देवातायै न मम यथा दैवतमस्त्विति द्रव्यत्यागं कुर्यात् ॥ अथहोमः ॥ आज्येन ( अग्नेरुत्तरभागे ) ॐ प्रजापतये स्वाहा इदं प्रजा पतये न मम ॥ ( अग्नेर्दक्षिणभागे ) ॐ इन्द्राय स्वाहा इदमिंद्राय न मम ॥ इत्याघारौ ॥ ( मध्ये समिद्धतमे ) ॐ अग्नये स्वाहा इदमग्नये न मम ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ इत्याज्यभागौ ॥ अथाचार्योऽग्निं संपूज्य पुरुषसूक्तेन ॥ जितं ते पुण्डरीकाक्ष इत्यादि महापुरुषविद्यास्तवेन च प्रार्थयेत् ॥

ग्र० ॥२१॥

अथ तिलाज्यचरुपकहोमः ॥ ( स च अनन्वारब्धकर्तृकः ) तत्रादौ सूर्यादिनवग्रहेभ्य श्चरुशाकल्यसहिताऽर्कादिसमिधस्तत्तन्मंत्रांते प्रत्येकमष्टाष्टसंख्यया जुहुयात् ॥ तत्र क्रमः ॥ ॐ गणानांत्वागणपतिᳯंहवामहेप्रियाणांत्वाप्रियपतिᳯंहवामहेनिधीनांत्वानिधिपतिᳯंहवामहेव्वसो मम ॥ आहमजानि गर्भधमात्वमजासिगर्भधम् स्वाहा ॥ इदंगणपतये ॥ १ ॐ आकृष्णेनरज सावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसविता रथेनादेवोयातिभुवनानिपश्यन् स्वाहा ॥ इदं सूर्याय १ ॐ इमंदेवाऽअसपत्नᳯंसुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेंद्र स्येन्द्रियाय ॥ इममुष्यपुत्रममुष्यैपुत्रमस्यैव्विशऽएषवोमीराजासोमोऽस्माकंब्राह्मणानाᳬंराजा स्वाहा ॥ इदं चन्द्रमसे २ ॐ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याऽअयम् ॥ अपाᳬंरेताᳬंसिजिन्व तिस्वाहा ॥ इदं भौमाय ३ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसᳯंसृजेथामयं च ॥ अस्मिन्त्स घस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा ॥ इदं बुधाय ४ ॐ बृहस्पतेऽअतियदर्य्यो ऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहि चित्रᳯंस्वाहा ॥ इदं बृहस्पतये ५ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिंद्रियं

ग्र० ॥२१॥

विपानठंशुक्रमंधसऽइंद्रस्येन्द्रियमिदंपयोमृतंमधुस्वाहा ॥ इदं शुक्राय ६ ॐ शन्नोदेवीरभिष्टयऽआ पोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनःस्वाहा ॥ इदं शनश्चैराय ७ ॐ कयानश्चित्रऽआभुवदूतीसदा वृधःसखा ॥ कयाशचिष्ठयावृतास्वाहा ॥ इदं राहवे ८ ॐ केतुंकृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाःस्वाहा ॥ इदं केतवे ९ अनेन होमेन सूर्य्यादयो ग्रहाः प्रीयंतामिति जलमुत्सृजेत् ॥ इति नवग्रहहोमः ॥ अथाधिदेवताप्रत्यधिदेवताहोमः ॥ ( तेभ्यश्चतुश्चतुःसंख्याकाभिराहुतिभिर्जुहुयात् ॥ ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ इदमीश्वराय १ ॐ श्रीश्चतेलक्ष्मीश्च० स्वाहा ॥ इदमुमायै २ ॐ यदक्रंदः प्रथमं जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यंमहिजातंतेऽअर्व्वन् ॥ स्वाहा ॥ इदं स्कंदाय ३ ॐ विष्णोरराटमसि० स्वाहा ॥ इदं विष्णवे ४ ॐ ब्रह्मजज्ञानं प्रथमंपुरस्तात्० स्वाहा ॥ इदं ब्रह्मणे ५ ॐ सजोषाऽइन्द्रसगणोमरुद्भिः सोमंपिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वाथा भयंकृणुहिविश्वतोनःस्वाहा ॥ इदमिंद्राय ६ ॐ यमायत्वांगिरस्वतेपितृमते स्वाहा ॥ स्वाहा धर्माय स्वाहा घर्मः पित्रेस्वाहा ॥ इदं यमाय ७ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि

समापोऽअद्भिरग्मतसमोषधीभिरोषधीः स्वाहा ॥ इदं कालाय ८ ॐ चित्रावसो स्वस्तितेपारमशीय
स्वाहा ॥ इदंचित्रगुप्ताय ९ अनेन होमेन ईश्वराद्यधिदेवताः प्रीयंताम् ॥ अथ प्रत्यधिदेवताहोमः ॐ
अग्निं दूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँऽआसादयादिह ॥ इदमग्नये १ ॐ आपोहिष्ठामयोभुव०
स्वाहा ॥ इदमद्भ्यः २ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः
स्वाहा ॥ इदं पृथिव्यै ३ ॐ इदं विष्णुर्विचक्रमे० स्वाहा ॥ इदं विष्णवे ४ ॐ त्रातारमिन्द्रमवितार
मिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रᳬस्वस्तिनोमघवाधात्विंद्रः स्वाहा ॥
इदमिंद्राय ५ ॐ अदित्यैरास्नासींद्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्व स्वाहा ॥ इदमिंद्राण्यै
६ ॐ प्रजापतेनत्वदेतान्न्यन्न्योव्विश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयᳯ
स्यामपतयोरयीणाᳯस्वाहा ॥ इदंप्रजापतये ७ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरि
क्षेयेदिवितेभ्यः सर्पेभ्यो नमः स्वाहा ॥ इदं सर्पेभ्यः ८ ॐ ब्रह्मजज्ञानं० स्वाहा ॥ इदं ब्रह्मणे ९
अनेन होमेन अग्न्यादिप्रत्यधिदेवताः प्रीयंताम् ॥ अथपंचलोकपालहोमः ॥ ( पंचलोकपालेभ्यो
दशदिक्पालेभ्यश्च द्वेद्वे आहुती जुहुयात् ) ॐ गणानांत्वा० स्वाहा ॥ इदं गणपतये १ ॐ अंबेऽअंबि

केऽम्बालिकेनमानयतिकश्चनससस्त्यश्वकः सुभद्रिकांकांपीलवासिनी७ंस्वाहा ॥ इदं दुर्गायै २ ॐ आनोनियुद्भिःशतिनीभिरध्वर ठं सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः स्वाहा ॥ इदं वायवे ३ ॐ घृतघृतपावानः० स्वाहा ॥ इदमाकाशाय ४ ॐ यावांकशामधुत्यश्विनासूनृतावती ॥ तयायज्ञम्मिलक्षताठं स्वाहा ॥ इदमश्विभ्याम् ५ अनेन होमेन गणेशादिपंचलोकपालाः प्रीयंताम् ॥ यथा बाणप्रहाराणामिति यजमानमूर्द्धाभिषेकः ॥ अथ दशदिक्पालहोमः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रठंहवेहवेसुहवठंशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रठंस्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥ इदमिंद्राय १ ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषठंरक्षमाणस्तवव्रते स्वाहा ॥ इदमग्नये २ ॐ यमायत्वांगिरस्वतेपितृमते स्वाहा स्वाहा घर्माय स्वाहा घर्मः पित्रेस्वाहा ॥ इदं यमाय ३ ॐ असुन्न्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु स्वाहा ॥ इदं निर्ऋतये ४ ॐ तत्त्वायामि ब्रह्मणाव्वंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशठं समानऽआयुः प्रमोषीः स्वाहा ॥ इदं वरुणाय ५

ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयं
पातस्वस्तिभिः सदानः स्वाहा ॥ इदं वायवे ६ ॐ व्वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावं
तः सचेमहि स्वाहा ॥ इदं कुबेराय ७ ॐ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेव्वय
म् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तयेस्वाहा ॥ इदमीशानाय ८ ॐ अस्मेरुद्रामेहना
पर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्माँ २ ऽअवंतुदेवाः
स्वाहा । इदं ब्रह्मणे ९ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः स्वाहा ॥
इदमनंताय १० अनेन होमेन इंद्रादयो दशदिक्पालदेवताः प्रीयंतां न मम ॥ अथ पितामहादीना
मेकैकाहुत्या होमः । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे १ ॐ विष्णवे स्वाहा इदं० २ ॐ शिवाय०
इदं० ३ ॐ गणपतये० इदं० ४ ॐ लक्ष्म्यै स्वाहा इदं० ५ॐ सरस्वत्यै० इदं० ६ ॐ दुर्गायै० इदं० ७
ॐ क्षेत्रपालय० इदं० ८ ॐ भूतेभ्यः स्वाहा इदं० ९ ॐ वास्तोष्पतये स्वाहा इदं० १० ॐ विश्व
कर्मणे स्वाहा इदं० ११ इति ग्रहमण्डलदेवताहोमः ॥ अथ प्रधानदेवताहोमः ॥ प्रधानदेवतायै
तत्तद्व्रतोद्यापनकल्पोक्तमंत्रैस्तिलपायसाज्यशर्करादिद्रव्यैर्होमं कुर्यात् ॥ अथ विष्णुव्रतोद्यापनेषु

व्र० ॥३३॥

सामान्यतः पुरुषसूक्तेन प्रत्यृचमाज्यहोमः ॥ ॐ सहस्रशीर्षा० स्वाहा इदं विष्णवे १ ॐ पुरुषऽएवेदꣳ सर्वं० स्वाहा इदं विष्णवे २ ॐ एतावानस्य० स्वाहा इदं० ३ ॐ त्रिपादूर्ध्वं० स्वाहा इदं० ४ ॐ ततोव्विराडजायत० स्वाहा इदं० ५ ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं० स्वाहा इदं० ६ ॐ तस्माद्यज्ञात्स र्व्वहुतऽऋचः सामानि० स्वाहा इदं० ७ ॐ तस्मादश्वा० स्वाहा इदं० ८ ॐ तंयज्ञम्बर्हिषि० स्वाहा इदं० ९ ॐ यत्पुरुषंव्यदधुः० इदं० स्वाहा १० ॐ ब्राह्मणोस्यमुख० स्वाहा इदं० ११ ॐ चंद्रमामनसो० स्वाहा इदं १२ ॐ नाभ्याऽआसीदं० स्वाहा इदं० १३ ॐ यत्पुरुषेण हविषा० स्वाहा इदं० १४ ॐ सप्तास्यासन्परि० स्वाहा इदं० १५ ॐ यज्ञेनयज्ञमयजन्त० स्वाहा इदं विष्णवे १६ ॥ इति पुरुषसूक्तहोमः ॥ ततस्तत्तदावरणदेवताभ्यश्चैकैकाहुतीर्हुत्वा ब्रह्मादि सर्वतोभद्रादिमंडलस्थापितदेवताभ्यः शिवव्रतोद्यापने लिंगतोभद्रदेवताभ्यश्चैकैकसंख्यया प्रत्ये तिलयवपायसाज्यद्रव्यैर्होमं कुर्यात् ॥ अथ सर्वतोभद्रमण्डलदेवताहोमः ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे १ ॐ सोमाय स्वाहा इदं सोमाय २ ॐ ईशानाय स्वाहा इदं० ३ ॐ इंद्राय स्वाहा इदं० ४ ॐअग्नये स्वाहाइदं ५ ॐ यमाय स्वाहा इदं० ६ ॐ निर्ऋतये स्वाहा इदं० ७ ॐ वरुणाय

ब्र०

स्वाहा इदं० ८ ॐ वायवे स्वाहा इदं० ९ ॐ अष्टवसुभ्यः स्वाहा इदं० १० ॐ एकादशरुद्रेभ्यः
स्वाहा इदं० ११ ॐ द्वादशादित्येभ्यः स्वाहा इदं० १२ ॐ अश्विभ्यां स्वाहा इदं० १३ ॐ विश्वेभ्यो
 देवेभ्यः स्वाहा इदं० १४ ॐ साध्येभ्यः स्वाहा इदं० १५ ॐ यक्षेभ्यः स्वाहा इदं० १६ ॐ भूतेभ्यः
स्वाहा इदं० ७ ॐ नागेभ्यः स्वाहा इदं० १८ ॐ गंधर्वेभ्यः स्वाहा इदं १९ ॐ अप्सरोभ्यः
स्वाहा इदं० २० ॐ स्कंदाय० इदं० २१ ॐ नंदीश्वराय० इदं २२ ॐ शूलाय० इदं २३
ॐ महाकालाय० इदं० २४ ॐ दक्षादिप्रजापतिभ्यः स्वाहा इदं० २५ ॐ दुर्गायै० इदं २६
ॐ विष्णवे० इदं २७ ॐ पितृभ्यः स्वाहा इदं २८ ॐ मृत्युरोगेभ्यः० इदं० २९ ॐ गणपतये०
इदं० ३० ॐ अद्भ्यः स्वाहा इदमद्भ्यः ३१ ॐ मरुद्भ्यः स्वाहा इदं० ३२ ॐ पृथिव्यै०
इदं० ३३ ॐ गंगादिसप्तसरिद्भ्यः स्वाहा इदं० ॐ ३४ सप्तसागरेभ्यः० इदं० ३५ ॐ मेरवे स्वाहा ॥३४॥
इदं मेरवे ३६ ॐ ऋग्वेदाय स्वाहा इदं० ३७ ॐ यजुर्वेदाय० इदं ३८ ॐ सामवेदाय० इदं ३९ ॐ अथ
र्ववेदाय० इदं ४० ॐ गदायै० इदं० ४१ ॐत्रिशूलाय०इदं०४२ॐवज्राय०इदं४३ॐशक्तये०इदं०४४ॐ
दंडाय० इदं ४५ ॐ खड्गाय० इदं० ४६ ॐपाशाय०इदं०४७ॐअंकुशाय०इदं०४८ॐ गौतमाय०इदं४९

ॐभारद्वाजाय० इदं० ५० ॐ विश्वामित्राय०इदं०५१ॐ कश्यपाय० ५२ ॐ जमदग्नये० इदं ५३ ॐ वसिष्ठाय० इदं० ५४ ॐ अत्रये० इदं५५ ॐअरुंधत्यै०इदं०५६ ॐऐंद्र्यैस्वाहाइदं०५७ॐकौमार्य्यै०इदं०५८ ॐ ब्राह्म्यै०इदं० ५९ ॐ वाराह्यै०इदं०६० ॐ चामुंडायै०इदं०६१ॐवैष्णव्यै०इदं०६२ॐमाहेश्वर्य्यै०इदं० ६३ ॐ वैनायक्यै स्वाहा इदं वैनायक्यै ॥ ६४ ॥ इति सर्वतोभद्रदेवताहोमः ॥ एवंतत्तद्देवताव्रतोद्यापनोक्त होमं वक्ष्यमाणविधिना समाप्य । अग्नेः स्थापितदेवतानां चोत्तरपूजनं कार्यम् ॥ तद्यथा । ॐमृडाग्नये नमः इति गंधादिपंचोपचारैरग्निं संपूज्य ॐ सूर्यादिस्थापितदेवताभ्यो नमः । ॐ ब्रह्मादिसर्वतोभद्रमंडलदेवताभ्यो नमः । इतिपंचोपचारैः संपूज्य । अनया पूजया मृडाग्निः स्थापितदेवताश्च प्रीयंतामिति जलमुत्सृजेत् ॥ ततो हुतशेषहविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् ॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम । ततो भूराद्या नवाज्याहुतयः । ॐ भूः स्वाहा इदमग्नये न मम १ ॐ भुवः स्वाहा इदं वायवे न मम २ ॐ स्वः स्वाहा इदं सूर्याय न मम ३ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नितमः । शोशुचानोव्विश्वाद्वेषा ॐ सिप्रमुमुग्ध्यस्मत्स्वाहा ४ इदमग्नीवरुणाभ्यां न मम ॥ ॐ सत्वन्नोऽअग्नेवमोभवोतीने

दिष्टोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोव्वरुणठंरराणोव्विहिमृडीकठंसुहवोनऽएधिस्वाहा ५ इद
मग्नीवरुणाभ्यां० ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि । अयानोयज्ञंव्वहास्य
यानोधेहिभेषजठंस्वाहा ६ इदमग्नये अयसे न मम ॐ येतेशतंव्वरुणयेसहस्रंयज्ञियाः पाशावि
ततामहांतः । तेभिर्नोऽअद्यसवितोतविष्णुश्वेमुञ्चन्तुमरुतः स्वर्काः स्वाहा ७ इदं वरुणाय समित्रे
विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐ उदुत्तमंव्वरुणमाशमस्मदवाधमंव्विमद्ध्य
मठंश्रथाय । अथाव्वयमादित्यव्रतेतवानागसोऽ अदितयेस्यामस्वाहा ८ इदं वरुणायादित्यायादि
तये च न मम ॥ ॐ प्रजापतये स्वाहा ९ इदं प्रजापतये न मम ॥ इति नवाहुतयः ॥ अथ बलिदानम् ॥
( तच्चैवम् । अग्न्यायतनस्य समंताद्दिक्षु विदिक्षु च दक्षदिक्पालानां माषभक्तबलयो देयाः ) देश
कालौ स्मृत्वा । अद्य पूर्वकृतस्य कर्मणः सांगतासिद्ध्यर्थं दिक्पालेभ्यो बलिदानं करिष्ये । इतिसं ॥३५॥
कल्प्य । ( पूर्वे ) ॐ इंद्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्त
बलिं समर्पयामि । भो इंद्र दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता
शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन इंद्रः प्रीयताम् ॥ १ ॥

( एवं सर्वत्रोहः ) ( आग्नेय्यां दिशि ) ॐ अग्नये सांगाय सपरिवाराय०भो अग्ने दिशं रक्ष बलिं भक्ष० आयुःकर्ता० अनेन बलिदानेन अग्निः प्रीयताम् ॥ २ ॥ ( दक्षिणस्याम् ) ॐ यमाय सांगाय० भो यम दिशं० आयुःकर्ता० । अनेन बलि० यमः प्रीयताम् ॥ ३ ॥ ( नैर्ऋत्याम् ॐ निर्ऋतये सांगाय० भो निर्ऋते० आयुःकर्ता० अनेन बलिदानेन निर्ऋतिः प्रीयताम् ॥ ४ ॥ ( पश्चिमायाम् ) ॐ वरुणाय सांगाय० भो वरुण० आयुःकर्ता० अनेन बलिदानेन वरुणः प्रीयताम् ॥५॥ ( वायव्याम् ) ॐ वायवे सांगाय० भो वायो० आयुःकर्ता० अनेन० वायुः प्रीयताम् ॥ ६ ॥ ( उत्तरस्याम् ) ॐ कुबेराय सांगाय० भो कुबेर० आयुःकर्ता० अनेन कुबेरः प्रीयताम् ॥७॥ ( ऐ ) शान्याम् ॐ ईश्वराय सांगाय० भो ईश्वर० आयुःकर्ता० अनेन बलिदानेन ईश्वरः प्रीयताम् ८ ( ईशानपूर्वयोर्मध्ये ) ॐ ब्रह्मणे सांगाय० भो ब्रह्मन् आयुःकर्ता० अनेन बलिदानेन ब्रह्मा प्रीयताम् ॥ ९ ॥ ( निर्ऋतिपश्चिमयोर्मध्ये ) ॐ अनंताय सांगाय० भो अनंत दिशं० आयुःकर्ता० अनेन बलिदानेन अनंतः प्रीयताम् ॥ १० ॥ ( ततो ग्रहमंडलसमीपे ) ॐ सूर्यादिनवग्रहेभ्यः साधिप्रत्यधिदेव पंचलोकपालसहितेभ्यः इमं सदीपदधिमाषभक्तबलिं समर्पयामि । भो भो सूर्यादिग्रहमंडलदेवता इमं

बलि गृह्णीत आयुःकर्तारः क्षेमकर्तारः०अनेन बलिदानेन श्रीसूर्यादिग्रहमंडलदेवताः प्रीयंताम् ॥ १ ॥ एवं सर्वतोभद्रमंडलदेवताभ्यश्चैकं बलिं दद्यात् ॥ ततः क्षेत्रपालबलिदानम् ॥ एकस्मिन् वंशपात्रे कुशानास्तीर्य तदुपरि अहारचतुर्गुणं द्विगुणं वा माषभक्तदध्योदनं जलपात्रं च निधाय हरिद्राकुंकुमसिंदूरकज्जलद्रव्यपताकायवचूर्णकृततैलदीपयुतं कृत्वा । ॐ क्षेत्रपालाय नमः इति गंधपुष्पादिभिर्बलिं संपूज्य। ॐ नमः क्षेत्रपालस्त्वं भूतप्रेतगणैः सह । पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा । देहि मे आयुरारोग्यं निर्विघ्नं कुरु सर्वदा ॥ १ ॥ इति प्रार्थ्य । बलिं गृहीत्वा ॐ क्षेत्रपालाय सांगाय भूतप्रेतपिशाचशाकिनीवेतालादिपरिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि । भोभोः क्षेत्रपाल सर्वतो दिशं रक्ष बलिं भक्ष मम सकुटुंबस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव । अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ॥ इमं बलिमनवेक्ष्यमाणेन दुर्ब्राह्मणेन नीत्वा चतुष्पथे निक्षिपेत् ॥ यजमानोपि तस्य पृष्ठतो द्वारपर्य्यंतं गत्वा जलं क्षिपेत् ॥ ततो हस्तौ पादौ प्रक्षाल्य आचामेत् ॥ अथ पूर्णाहुतिहोमः ॥ देशकालौ स्मृत्वा । कृतस्य कर्मणः सांगतासिद्ध्यर्थं पूर्णाहुतिहोमं करिष्ये । इति संकल्प्य । आज्याधि

प्र०
॥३६॥

अयणमाज्योद्वासनमवेक्षणमुत्पवनं च कृत्वा स्रुवं पूरयित्वा नारिकेलं पुगीफलं वा धृत्वा यजमानः आचार्यस्कंधं स्पृशन् जुहुयात् ॥ तत्र मंत्राः ॥ ॐ समुद्रादूर्मिर्मधुमाँ २ऽउदारदुपाᳬंशुनासममृतत्व मानट् । घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ व्वयन्नामप्रब्रवामाघृतस्यास्मि न्यज्ञेधारयामानमोभिः । उपब्रह्माशृणवच्छस्यमानंचतुःश्रृंगोव्वमीद्गौरऽएतत् ॥ २ ॥ चत्वारिश्रृंगा त्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां २ऽआविवेश ॥ ३ ॥ त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् ॥ इन्द्रऽएकᳬंसूर्य्यऽएकंजजानव्वेनादेकᳬंस्वध यानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमि हिरण्ययोव्वेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवंतिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः । एतेऽ अर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिंधोरिवप्राध्वनेशूघनासोव्वातप्रमियःपतयन्ति यह्वाः । घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ७ ॥ अभिप्रवन्तसमनेव्वयोषाःक ल्याण्यःस्मयमानासोऽअग्निम् ॥ घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्यतिजातवेदाः ॥ ८ ॥ कन्याऽ इवव्वहतुमेतवाःऽ उऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्र यज्ञोघृतस्यधाराऽअभि

तत्पवंते ॥ ९ ॥ अभ्यर्षतसुष्ठुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानोघृतस्य धारामधुमत्पवंते ॥ १० ॥ धामन्तेविश्वंभुवनमधिश्रितमंतः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेय ऽआभृतस्तमस्याममधुमंततऽऊर्म्मिम् ॥ ११ ॥ पुनस्त्वादित्यारुद्रा व्वसवःसमिंधताम्पुनर्ब्रह्माणोव्व सुनीथयज्ञैः ॥ घृतेनत्वंतन्वंव्वर्धयस्वसत्याःसंतुयजमानस्यकामाः ॥ १२ ॥ सप्ततेऽअग्नेसमिधःसप्त जिह्वाःसप्तऽऋषयःसप्तधामप्रियाणि । सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वाघृतेनस्वाहा १३ पूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ वस्नेवव्विक्रीणा वहाऽइषमूर्जठंशतक्रतोस्वाहा ॥ १४ ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अभ्द्यश्च न मम ॥ इति पूर्णाहुतिं हुत्वा ॐ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् । तेज आयुष्यमारोग्यं देहि मे हव्यवाहन १ इति प्रार्थयेत् ॥ ततस्त्र्यायुषकरणम् ॥ स्रुवेण भस्मानीय दक्षिणाऽनामिकाग्रगृहीतभस्मना । ॐ त्र्यायुषं जम दग्नेरिति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे ॐ तन्नोऽ अस्तु त्र्यायुषमिति हृदि । इति त्र्यायुषं कुर्यात् ॥ ततः संस्रवप्राशनमाचमनं च कृत्वा ब्रह्मणे पूर्ण पात्रदानं कार्यम् । तद्यथा देशकालौ पठित्वा । अद्य कृतैतदमुकव्रतोद्यापनहोमकर्मप्रतिष्ठार्थमिदं पूर्ण

पात्रं सदक्षिणाकं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्र ददे । इति दद्यात् ॥ ॐ स्वस्तीतिप्रतिवचनम् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ ततःप्रणीतोदकेन ॐ सुमि त्रियानऽआपऽओषधयः संत्विति यजमानमूर्धानमभिषिंचेत् । ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टि यंचव्वयंद्विष्मः इतीशान्यां प्रणीतां न्युब्जीं कुर्यात् ॥ ततः आस्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभि घार्य्य ॥ ॐ देवागातुविदोगातुरव्वित्वागातुमितमनसस्पतऽइमंदेवयज्ञठँस्वाहावातेधाःस्वाहा १ इति मंत्रेण हस्तेनैव जुहुयात् ॥ एवं होमं समाप्य नवग्रहकलशोदकेन दूर्वाम्रपल्लवैरुदङ्मुख आचार्य ऋत्विजश्च सपत्नीकं यजमानं प्राङ्मुखमुपविष्टमभिषिंचेयुः ( अभिषेके पत्नी वा मतः ) तत्र मंत्राः ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । महेरणायचक्षसे ॥ १ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माअरङ्गमामवोयस्यक्षयाय जिन्वथ । आपोजनयथाचनः ॥ ३ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रठँहवेहवेसुहवठँशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रठँस्वस्तिनोमघवाधात्विन्द्रः ॥ ४ ॥ ॐ व्वरुणस्योतंभनमसि० ॥ ५ ॥ ॐ भगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्न्नृवन्तः

स्याम ॥ ६ ॥ इदमापः प्रवहतावद्यंचमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽभीरुणम् ॥
आपोमातस्मादेनसः पवमानश्चमुंचतु ॥ ७ ॥ पुनंतुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तु
विश्वाभूतानिजातवेदः पुनीहिमा ॥ ८ ॥ आप्यायस्वसमेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्यसंग
थे ॥ ९ ॥ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तारिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुम
ह्यम् ॥ १० ॥ देवस्यत्वसवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ ११ ॥ सरस्वत्यैवाचोयंतुर्यन्त्रियेद
धामिबृहस्पतयेष्ट्वासाज्येनाभिषिंचामि ॥ १२ ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ता
भ्याम् । अश्विनोभैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामिदेवस्यत्वासरस्वत्यैभैषज्येनवीर्य्यायान्नाद्या याभिषिंचा
मीन्द्रस्येन्द्रियेणबलायश्रियेयशसेभिषिंचामि ॥ १३ ॥ पालासं भवतितेन न ब्राह्मणोभिषिं
चतिब्रह्मवैपालाशोब्रह्मणैवैनमेतदभिषिंचति ॥ १४ ॥ सर्वेषांवाऽएषवेदानाꣳरसोयत्सापसर्वेषामेनैव
मेतद्वेदानाꣳरसेनाभिषिंचति ॥ १५ ॥ यद्वेवकल्पांजुहोतिप्राणावैकल्पाऽअमृतमुपवैप्राणऽअमृते
नैवैनमेतदभिषिंचति ॥ १६ ॥ दीर्घायुत्वायबलायवर्चसेसुप्रजास्त्वायसहस्राऽअथोजीवशरदःश
तम् ॥ १७ ॥ द्यौः शांतिरंतरिक्षꣳशांतिः पृथिवीशांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांति

प्र० ॥३८॥

र्विश्वेदेवाः शांतिर्ब्रह्मशांतिः सर्वशांतिः शांतिरेवशांतिः सामाशांतिरेधि ॥ १८ अथ पौराणिका मंत्राः । सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः १ प्रद्युम्नश्चानिरुद्धश्च भवंतु विजयाय ते । आखंडलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा २ वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ३ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः कांतिस्तु मातरः ४ एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः । आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः ५ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः । देवदानवगंधर्वा यक्षराक्षसपन्नगाः ६ ऋषयो मुनयो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ७ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ८ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ९ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । अभिषिंचंतु ते सर्वे धर्मकामार्थसिद्धये १० अमृताभिषेकोस्तु । एवमभिषेकं कृत्वा अनंतरं सर्वौषधीरनुलिप्य । शुद्धोदकेन स्नात्वा । उभयोः स्नानवस्त्रत्यागः । शुक्लमाल्यांबरधरो धृतमंगलतिलकः

सपत्नीको यजमानः स्वासने उपविश्य । आचम्य । आज्ये मुखमवलोक्य । ब्राह्मणाय छायापा
त्रदानं कुर्यात् ॥ अथाचार्यादिपूजनम् ॥ यजमानो देशकालौ संकीर्त्य कृतस्यामुकव्रतोद्यापन
कर्मणः सांगतासिद्ध्यर्थमाचार्यादीन् वस्त्रतांबूलदक्षिणाभिः पूजयिष्ये । इति संकल्प्य विध्युक्त
प्रकारेण आचार्यादीन् गंधादिभिः संपूज्य दक्षिणादिभिः प्रतोष्य आचार्याय श्वेतां सवत्सां सालं
कारां गां दद्यात् । तदभावे गोनिष्क्रयरजतद्रव्यं वा दद्यात् ॥ ततो ऋत्विगादिभ्यो यथाशक्ति
दक्षिणां दत्त्वा अन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दत्त्वा तेषामाशिषो गृह्णीयात् ॥ ते
च ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति
नोबृहस्पतिर्दधातु ॥ १ ॥ श्रीर्वर्च्चस्वमायुष्यमारोग्यमाविधात्पवमानंमहीयते ॥ धान्यंधनंपशुबहु
पुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ २ ॥ पुनस्त्वादित्यारुद्रावसवः समिंधताम्पुनर्ब्रह्माणोवसुनीथ
यज्ञैः ॥ घृतेनत्वन्तवन्वर्द्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥ ३ ॥ मंत्रार्थाः सफलाः संतुः पूर्णाः
सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ ४ ॥ इत्याशिषो दद्युः ॥ ततो ब्राह्मण
भोजनसंकल्पः ॥ देशकालौ स्मृत्वा । कृतस्य कर्मणः सांगतासिद्ध्यर्थममुकसंख्याकान्ब्राह्मणा

न्भोजयिष्ये इति संकल्प्य । पीठदानं कुर्यात् । देशकालौ संकीर्त्य । इदं पीठं सोपस्करम् अमुकदेवता प्रतिमायुतं श्रीपरमेश्वरप्रीतये तुभ्यमहं संप्रददे । इत्याचार्याय दद्यात् ततो देवताग्निविसर्जनम् ॥ यांतु देवगणाः सर्वे स्वशक्त्या पूजिता मया । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ १ ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे । उपप्रयन्तुमरुतः सुदानवऽइन्द्रप्राशूर्भवासचा ॥ २ आवाहितदेवताः स्वस्वस्थाने गच्छत ॥ गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ १ ॥ ॐ यज्ञयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा । एषतेयज्ञोयज्ञपतेसहसूक्तवाकः सर्व्ववीरस्तंजुषस्वस्वाहा ॥ १ ॥ यज्ञनारायण स्वस्थाने गच्छ ॥ एवं देवान्विसृज्य यज्ञोपकरणादिकम् ऋत्विग्भ्यो दत्त्वा आचार्यादीन् संपूज्य करौ संपुटीकृत्य व्रतपूर्णतां वाचयेत् ॥ जपच्छिद्रं तपश्छिद्रं यच्छिद्रं व्रतकर्मणि । सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥ १ ॥ इति प्रार्थयेत् ॥ अच्छिद्रं भवतु ते व्रतमिति ब्राह्मणाः प्रतिवदेयुः ॥ ततस्तत्तद्व्रतकल्पोक्तसंख्याकान्ब्राह्मणान् शक्त्यनुरूपं वा भोजयित्वा । यस्यस्मृत्या च० १ प्रमादात्कुर्वतां० २ इति यज्ञपूर्तिकामो विष्णुं स्मृत्वा कुटुम्बजनैः परिवृतः सोत्सवः स्वयं भुंजीत ॥

इति व्रतोद्यापनप्रकाशे सर्वव्रतोद्यापनोपयोगिप्रयोगः समाप्तः ॥ अथ गोदानप्रयोगः ॥
यजमानः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचांतः मृद्गोमयोपलिप्तायां भूमौ स्वासने
प्राङ्मुख उपविश्य करौ सपवित्रौ कृत्वा । आचम्यप्राणानायम्य । ॐ सुमुखश्चैकदंतश्चे
त्यादिगणपतिं संपूज्य कुलदेवता गुरूंश्च नत्वा । स्वदक्षिणतः उदङ्मुखं ब्राह्मणमासने समु
पवेश्य । देशकालौ स्मृत्वा । अद्य श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामोऽमुकव्रतोद्यापनपूर्त्ति
कामश्च नारायणप्रीतये गोदानमहं करिष्ये इति संकल्प्य । तदंगत्वेन देवब्राह्मणपूजनं
धेनुपूजनं च करिष्ये । इति संकल्पयेत् ॥ ततो गां ददामीति द्विजकरे जलं दद्यात् । ॐ
ददस्व इति विप्रो वदेत् ॥ ततो गंधपुष्पतांबूलवासांस्यादाय । देशकालौ संकीर्त्य । अमुकव्रतोद्या
पनसांगतासिद्ध्यर्थममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्गोदानार्थं त्वामहं
वृणे । इतिवृत्त्वा । ॐ वृतोस्मीतिप्रतिवचनानंतरं ब्राह्मणं पाद्यार्घ्यगंधादिभिः पूजयेत् ॥ ततः ।
ॐ यदर्चनं कृतं विप्र तव विष्णुस्वरूपिणः । तत्सर्वं मम दानं च विष्णवे त्वं समर्पय ॥ १ ॥ इति
प्रार्थ्य । स्वपुरतः प्राङ्मुखीं गां संस्थाप्य वत्समुत्तरतो न्यसेत् ॥ अथ पूजा ॥ आवाहयाम्यहं देवीं

सुरभीं लोकमातरम् । पूज्यां त्रिभुवने देवैर्गंधर्वैः किन्नरैः सदा ॥ १ ॥ अमृतं श्रवसे देवि सर्वधर्म प्रवर्तनि । तारयस्व महादेवि दुःसहाद्दुःखसागरात् ॥ २ ॥ ॐ भूर्भुवःस्वः धेनो इहागच्छ इह तिष्ठ । इत्यावाहनम् ॥ १ ॥ सौरभेयि सर्वहिते पवित्रे पापनाशिनि । गृह्णीष्वेतन्मया दत्तं पाद्यं त्रैलोक्य वंदिते ॥ ॐ भूर्भुवःस्वः रुद्ररूपिण्यै गवे नमः पाद्यं समर्पयामि ॥ २ ॥ ( एवं सर्वत्र ) इति पाद्यम् ॥ सर्व देवमये देवि सर्वतीर्थमये शुभे । गृहाणार्घ्यं मया दत्तं सौरभेयि नमोस्तु ते ॥ ३ ॥ इत्यर्घ्यम् ॥ देहे स्थितासि रुद्राणि शंकरस्य सदा प्रिये । धेनुरूपेण सा देवि मम पापं व्यपोहतु ॥ ४ ॥ इत्याचमनीयम् ॥ या लक्ष्मीः सर्वलोकेषु या च देवेष्ववस्थिता ॥ धेनुरूपेण सा देवि मम पापं व्यपोहतु ॥ ५ ॥ इति स्नानम् ॥ आच्छादनं च कौशेयं शुद्धं चैव सुनिर्मलम् । सुरभ्यै दीयमानं तु प्रीयतां केशवः सदा ॥ ६ ॥ इति वस्त्रम् ॥ सर्वदेवप्रियं देवि चंदनं मलयोद्भवम् ॥ कस्तूरीकुंकुमाढ्यं च गौर्गंधः प्रतिगृह्यताम् ॥ ७ ॥ इति गंधम् ॥ ऐरावतकुले जाता शतक्रतुप्रिया सदा । या लक्ष्मीःसर्वभूतानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवि पुष्पाणि प्रतिगृह्यताम् ॥ ८ ॥ इति पुष्पाणि ॥ ( ततोऽलंकारान् शृङ्गभूषार्थं सुवर्णम् । चरणभूषार्थं रजतम् । भालभूषा

र्थमादर्शम् । नेत्रभूषार्थं रत्नद्वयम् । कंठभूषार्थं घंटाम् । पुष्पस्रजं च । सर्वाऽवयवभूषार्थं पट्टदुकूलम् । पृष्ठभूषार्थं ताम्रम् । पुच्छभूषार्थंमुक्ताफलस्रजम् । दोहनार्थं पित्तलपात्रम्। दुग्धपानार्थं कांस्यपात्रं च संपादयेत् ) ॥ अथांगपूजा ॥ ॐ आस्याय नमः । ॐ शृंगाभ्यां नमः । ॐ पृष्ठायां नमः । ॐ पुच्छाय नमः । ॐ पूर्वपद्भ्यां नमः । ॐ पश्चिमपद्भ्यां नमः । अथाङ्गदेवतापूजा ॥ शृंगमूलयोः ॐ ब्रह्मविष्णुभ्यां नमः १ ललाटे ॐ महादेवाय नमः २ नासावंशे षण्मुखाय नमः ३ कर्णयोः अश्विभ्यां नमः ४ चक्षुषोः शशिभास्कराभ्यां नमः ५ दंतेषु मरुद्भ्यो नमः ६ जिह्वायां वरुणाय नमः ७ हुंकारे सरस्वत्यै नमः ८ गंडयोः यमजाभ्यां नमः ९ ओष्ठयोः संध्याद्वयाय नमः १० ग्रीवायाम् इंद्राय नमः ११ कुक्षिदेशे रक्षोभ्यो नमः १२ ॥ उरसि साध्येभ्यो नमः १३ चतुष्पादेषु धर्माय नमः १४ खुरमध्ये गंधर्वेभ्यो नमः १५ खुरपार्श्वे अप्सरोभ्यो नमः १६ पृष्ठे एकादशरुद्रेभ्यो नमः १७ ॥ सर्वसंधिषु वसुभ्यो नमः १८ श्रोणीतटे पितृभ्यो नमः १९ लांगूले सोमाय नमः २० वालेषु आदित्यरश्मिभ्यो नमः २१ गोमूत्रे गंगायै नमः २२ क्षीरे सरस्वत्यै नमः २३ दध्नि नर्मदायै नमः २४ सर्पिषि हुताशनाय नमः २५ रोमसु देवायनामष्टाविंशतिकोटिभ्यो नमः २६

उदरे पृथिव्यै नमः २७ पयोधरेषु चतुःसागरेभ्यो नमः २८ इत्यंगदेवताः संपूज्य ॥ वनस्पतिरसो धूपो गंधाढ्यो गंध उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥ ९ ॥ इति धूपम् ॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण सुरभे मया दत्तं हि भक्तितः ॥१०॥ इति दीपम् ॥ वैष्णवी सुरभे मातर्नित्यं विष्णुपदे स्थिते । सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ॥ ११ ॥ इति गोग्रासनैवेद्यम् ॥ यत्ते मयार्पितं शुद्धं घंटाचामरसंयुतम् ॥ ग्रैवेयं तद्गृहाणेदं मुनित्रिदशवंदिते ॥ १२ ॥ इति घंटाचामरम् ॥ पंच गावः समुत्पन्ना मथ्यमाने महार्णवे । तासां मध्ये तु या नंदा तस्यै देव्यै नमोनमः ॥ १३ ॥ इति नमस्कारः ॥ ततः ॐ इरावतीधेनुमतीहिभूतठंस्यवसिनीमनवेदशस्या । व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा ॥ १ ॥ इति मंत्रेण प्रदक्षिणीकुर्वन् प्रार्थयेत् ॥ गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम् १ ॥ ततो यजमानः प्राङ्मुख उदङ्मुखो वा गोपुच्छं गृहीत्वा कुशत्रयाक्षतयवतिलजलैर्देवर्षिपितृतर्पणं कुर्यात् । ( सव्येन ) ॐ गणपतिश्च तथा ब्रह्मा केशवो रुद्रदेवता लक्ष्मीः सरस्वती चैव ये चान्ये च नवग्रहाः ॥ १ ॥ ते सर्वे तृप्तिमायांतु गोपुच्छोदकतर्पणैः । देवा

धिदेवताः सर्वास्तथा प्रत्यधिदेवताः ॥ २ ॥ नक्षत्रवसवो रुद्रा विश्वेदेवा मरुद्गणाः । ते सर्वे तृप्तिमा यांतु गोपुच्छोदकतर्पणैः ॥ ३ ॥ किन्नराश्च पिशाचाश्च यक्षगंधर्वराक्षसाः । दैत्याश्च दानवाश्चैव ये चा न्येऽप्सरसां गणाः । ते सर्वे तृप्ति० ॥ ४ ॥ पुलस्तिःपुलहश्चैव दत्तात्रेयोथ भार्गवः । वसिष्ठांगिरसा वापि कश्यपश्चैव काश्यपाः । ते सर्वे तृप्ति० ॥ ५ ॥ ऋषयो मानवा देवा अधःस्था भूमिदेवताः । वाय्वाधारा जलाधाराः साध्या यक्षास्तथैव च । ते सर्वे तृप्ति० ॥ ६ ॥ सरितः सागराश्चैव पर्वता वनमेव च । लता औषधयश्चैव मृगा आरण्यवासिनः । ते सर्वे तृप्ति० ॥ ७ ॥ स्वाहा स्वधा तथा लक्ष्मीर्वृद्धिः श्रद्धा सरस्वती । मेधा प्रीतिस्तथा लज्जा कीर्तिश्च दशमी तथा । ताः सर्वास्तृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ ८ ॥ विश्वाद्याश्चैव ये देवा ये च वैकुंठवासिनः । गरुडासनमारूढा आगताः पुच्छगोचरे । ते सर्वे तृप्ति० ॥ ९ ॥ रुद्राद्या देवताः सर्वे ये च कैलासवासिनः । वृषभासनमारूढा योगिनः पीठसंस्थिताः । ते सर्वे तृप्ति० ॥ १० ॥ आदित्याद्या ग्रहाः सर्वे ऋक्षाश्चाश्विनिकादयः । मेषाद्या राशयश्चैव योगाविष्कंभकादयः । ते सर्वे तृप्ति० ॥ ११ ॥ ( ततः कंठीकृत्वा उदङ्मुखः कायतीर्थेन यवोदकैस्तर्पयेत् ) सनकः सनंदनश्चैव तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः

पंचशिखस्तथा । ते सर्वे तृप्ति० ॥ १२ ॥ ( ततोऽपसव्यं दक्षिणामुखः पातितवामजानुर्द्विगुणभुग्न
कुशत्रयतिलजलैः पितृतीर्थेन तर्पयेत् ) कव्यवाडनलः सोमो यमोऽर्यमा तथैव । अग्निष्वात्ताः
पितृगणा बर्हिषदश्च सोमपाः । ते सर्वे तृप्ति० ॥ १३ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ।
मातामहः प्रमाता च वृद्धमातामहस्तथा । ते सर्वे तृप्ति० ॥ १४ ॥ माता पितामही चैव तथैव प्रपिता
मही । मातामह्यादयःसर्वास्तथैवान्याश्च गोत्रजाः । ताःसर्वास्तृप्ति० ॥ १५ ॥ पितृवंशे मृता ये
च मातृवंशे तथैव च । गुरुश्वशुरबंधूनां ये चान्येबांधवा मृताः । ते सर्वे० ॥ १६ ॥ ये मे कुले लुप्तपिंडाः
पुत्रदारविवर्जिताः । क्रियालोपगता ये च ये चांधाः पंगवस्तथा । ते सर्वे० ॥ १७ ॥ विरूपा आम
गर्भाश्च ज्ञाताऽज्ञाताः कुले मम । वृक्षयोनिगता ये च ये च कीटपतंगकाः । ते सर्वे० ॥ १८ ॥ नरके
रौरवे सर्वे महारौरवसंस्थिताः । असिपत्रवने घोरे कुंभीपाके च ये स्थिताः । ते सर्वे० ॥ १९ ॥
स्वार्थबंधमृता ये च शस्त्रादिविषमोहिताः । ब्रह्महस्तमृता ये च सिंहसर्पैश्च श्रृंगिभिः । ते सर्वे०
॥ २० ॥ चांडालेन मृता ये च पथि लोपगताश्च ये । जलमध्ये मृता ये च ह्यल्पमृत्युगताश्च
ये । ते सर्वे० ॥ २१ बंदिमध्ये मृता ये च स्त्रीहस्तेनैव ये मृताः । ये च ब्रह्माण्डखंडे च व

संति पितृदेवताः ॥ २२ ॥ सर्वे च मानवा नागा आगताः पुच्छगोचरे । ते सर्वे तृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ २३ ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वये स्मिन्मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ ते सर्वे तृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ २४ ॥ एवं तर्पणं कृत्वा । सव्येन आचम्य । ब्राह्मणं गंधादिभिः संपूज्य । सतिलजलकुशाक्षतं गोपुच्छं गृहीत्वा । देशकालौ संकीर्त्य अद्य कृतैतदमुकव्रतोद्यापनकर्मणः संपूर्णतासिद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थमिमां गां सवत्सां सुशीलां सुपूजितां पयस्विनीं सुवर्णशृंगीं रौप्यखुरां ताम्रपृष्ठीं घंटाचामर भूषितां मुक्तादामलांगूलां वस्त्रयुगच्छन्नां कांस्यपानीयपात्रां पैत्तिलदोहां यथाशक्त्यलंकृतां रुद्रदैव तामसुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति सतिलजलगोपुच्छं ब्राह्मणहस्ते निक्षिपेत् । न ममेति त्यागं कुर्यात् । ततः प्रतिग्रहीता । ॐ स्वस्तीत्युक्त्वा । ॐ कोदात्कामोदादिति कामस्तुतिं पठेत् । ततः । यज्ञसाधनभूता या विश्वस्याघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ १ ॥ इति प्रार्थ्य । गोदानसांगतासिद्ध्यर्थं हिरण्यं दद्यात् ॥ देशकालौ स्मृत्वा ॥ ॐ अद्य कृतैतद्गोदानकर्मणः सांगतासिद्ध्यर्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय

दक्षिणात्वेन तुभ्यमहं संप्रददे । इति दत्त्वा । ॐ स्वस्तीतिप्रतिवचनानंतरम् । या देवी सर्वभूतानां या च विष्णुपदे स्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ १ ॥ इति प्रार्थयेत् ॥ अनेन गोदानेन श्रीपरमेश्वरः प्रीयताम् ॥ इति गोदानप्रयोगः ॥ अथ शय्यादानप्रयोगः ॥ तत्रादौ सारदारुमयीं दृढां दंतपत्रहेमपट्टिकाद्यैरलंकृतां हंसतूलीप्रतिच्छन्नां शुभ्रगंडोपधानकां प्रच्छादनपटीयुक्तां गंधधूपाधिवासितां पुष्पतांबूलकुंकुमकर्पूरागुरुचंदनदीपोपानच्छत्रचामरव्यजनासनसप्तधान्यघृतपूर्णकुंभसहितां शय्यामासाद्य तत्र स्वर्णमयीं लक्ष्मीनारायणप्रतिमां स्थापयेत् ॥ ततः स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य । आचम्य प्राणानायम्य । गणेशादिदेवान्नत्वा । देशकालौ संकीर्त्य अद्य कृतैतदमुकव्रतोद्यापनसांगतासिद्ध्यर्थे श्रीपरमेश्वरप्रीत्यर्थं शय्यादानं करिष्ये । तदंगत्वेन देयब्राह्मणपूजनं लक्ष्मीनारायणपूजनं शय्यापूजनं च करिष्ये । इति संकल्प्य । ब्राह्मणस्य पादौ प्रक्षाल्य गंधपुष्पमालादिभिः संपूजयेत् । ततो देशकालौ स्मृत्वा । अद्य शय्यादानार्थममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षतपुष्पतांबूलवासोभिस्त्वामहं वृणे इति वृणुयात् । ततः वृतोऽस्मीति प्रतिवचनानंतरं विप्रं शय्यायामुपवेश्य । ॐ सोपकरणशय्यायै नम इति शय्यां गंधादिभिः संपूज्य । ॐ नमः प्रमा

ण्य देव्यै शय्यायै इति नमस्कृत्य । तत्रैव ॐ लक्ष्मीनारायणाय नमः । इति सुवर्णप्रतिमायां लक्ष्मीनारायणं षोडशोपचारैः संपूज्य । नमस्कुर्यात् । ततो देशकालौ संकीर्त्य । अद्य कृतैतदमुकव्रतोद्यापनकर्मणः सांगतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमिमां शय्यां सोपस्करां लक्ष्मीनारायणप्रतिमायुतामंगिरोदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय सुखशयनार्थं तुभ्यमहं संप्रददे । इति सतिलाक्षतोदकं विप्रहस्ते दद्यात् । ततः ॐ स्वस्तीति प्रतिवचनानंतरं दानप्रतिष्ठार्थं हिरण्यं जलकुशादीनि चादाय देशकालौ स्मृत्वा । अद्य कृतैतत्सोपकरणशय्यादानकर्मणः प्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं संप्रददे । इति विप्रहस्ते दद्यात् । प्रतिग्रहीता ॐ स्वस्तीत्युक्त्वा शय्यां संस्पृशेत् । ततो दाता । ॐ यथा न कृष्णशयनं शून्यं सागरजातया । शय्या ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ १ ॥ इति प्रार्थ्य प्रणम्य विप्रं विसृजेत् ॥ इतिशय्यादानम् ॥ इतिश्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना श्रीवसिष्ठगोत्रोद्भवश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचंद्रात्मजेन पंडितगौडश्रीचतुर्थीलालशर्मणाविरचिते व्रतोद्यापनप्रकाशे सर्वव्रतोद्यापनोपयोगिपद्धतिकथनं नाम प्रथमं प्रकरणम् ॥ १ ॥ श्रीरस्तु ॥

॥ अथ द्वितीयप्रकरणम् ॥ ॥ अथ चैत्रशुक्लप्रतिपादारभ्य संवत्सरपर्य्यंतोक्तव्रतोद्यापनानि लिख्यंते । तत्र तावत् चैत्रशुक्लप्रतिपदि आरोग्यप्रतिपद्व्रतोद्यापनम् ॥ विष्णुधर्मोत्तरे ॥ तत्र प्रयोगः ॥ संवत्सरावसाने पंचदश्यामुपवासं कृत्वा प्रतिपदि प्रातः स्नात्वा नित्यकर्म समाप्य । देशकालौ संकीर्त्य । ममात्मनः आयुरारोग्यादिप्राप्तिकामनया श्रीसूर्यनारायणप्रीत्यर्थम् आरोग्यप्रतिपद्व्रतं करिष्ये । इति संकल्प्य सुमुखश्चैकदंतश्चेत्यादिस्मरणपूर्वकं श्रीगणेशं संपूज्य । पंचवर्णविनिर्मिते पद्मे श्रीभास्करं सांगमावाह्य । ॐ भास्कराय नमः । इति श्वेतचंदनश्वेतपुष्पमाल्यैः कुंदुरुधूपेन घृतदीपेन च पायसाऽपूपदधिशर्करोदन घृतदुग्धादिभिश्चोपहारैर्नानाफलतांबूलदक्षिणादिभिश्च षोडशोपचारैः संपूज्य । ब्राह्मणान्संतर्प्य । दिन चतुर्थभागे स्वयं सघृतमेकमेव ग्रासं भक्षयित्वा पानीयं पीत्वा अवशिष्टान्नं त्यजेत् । ततो ब्राह्मणा नुमत्या पुनः सघृतमन्नं भुंजीत पानीयपानं च कुर्यात् । एवं वर्षपर्यंतं प्रतिमासं शुक्लप्रतिपदि व्रतं कृत्वा त्रयोदशे मासे उद्यापनं कुर्यात् । तद्यथा देशकालौ संकीर्त्य ममायुरारोग्यादिप्राप्ति पूर्वकं श्रीसवितृसूर्यनारायणप्रीतये पूर्वाचरितस्यारोग्यप्रतिपद्व्रतस्योद्यापनं करिष्ये इतिसंकल्प्यगणपतिपूजनं पुण्याहवाचनमाचार्यादिवरणं च पूर्ववत्कृत्वा । सर्वतोभद्रमंडले ब्रह्मादिदेवान्संपूज्य । तत्रैव

मडलमध्ये ॐ महीद्यौरित्यादिपूर्वोक्तैर्मन्त्रैर्यथाविधिना ताम्रकलशं संस्थापयेत् । ततस्तदुपरि पंचव
र्णविनिर्मिते पद्मे सौवर्णी सूर्यप्रतिमां प्रतिष्ठाप्य । ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ।
हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ ॐ भूर्भुवःस्वर्भगवन् सवितः सूर्य इहागच्छ इह
तिष्ठ । इत्यावाह्य । मनोजूतिरिति प्रतिष्ठाप्य । ॐ सूर्यनारायणाय नमः । इति पुरुषसूक्तेन षोडशो
पचारैः पूर्वोक्तपूजोपचारैश्च संपूजयेत् । ततः पायसादिसदन्नेन ब्राह्मणान् यथाशक्त्या संभोज्य व्रतपू
र्तये आचार्याय सवत्सां धेनुं दद्यात् अन्यत्सर्वं पूर्ववत् । इति चैत्रशुक्लप्रतिपद्यारोग्यप्रतिपद्व्रतोद्याप
नम् ॥ अस्यामेवोक्तं विद्याव्रतं मदनरत्ने विष्णुधर्मे ॥ तत्रप्रयोगः ॥ चैत्रशुक्लप्रतिपदि देशकालौ संकी
र्त्य । ममात्मनः सांगविद्याप्राप्तिकामो ब्रह्मप्रीत्यर्थं विद्याव्रतं करिष्ये इतिसंकल्प्य पंचवर्णके रचितेऽ
ष्टपत्रके कमले मध्ये ॐ ब्रह्मजज्ञानं० ॐ भूर्भुवःस्वः ब्रह्माणमावाहयामि स्थापयामि ॥ १ ॥ इति
ब्रह्माणमावाहयेत् । ततः पूर्वपत्रे ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारंरत्नधातमम् ॐ भू०
ऋग्वेदमावाहयामि स्थाप० ॥ २ ॥ दक्षिणपत्रे ॐ इषेत्वोर्जेत्वा० ॐ भूर्भुवःस्वःयजुर्वेदमावाहयामि स्थाप
यामि ॥ ३ ॥ पश्चिमपत्रे ॐ अग्नऽआयाहिवीतये गृणानोहव्यदातये । निहोतासत्सिबर्हिषि ॐ भूर्भुवः

स्वः सामवेदमावाह० ॥ ४ ॥ उत्तरपत्रे ॐ शन्नोदेवी० ॐ भूर्भुवःस्व अथर्वेदमावा० ॥ ५ ॥ आग्नेयपत्रे ॐ भू० वेदांगानि आवाहयामि स्थापयामि ॥ ६ ॥ निर्ऋतिपत्रे ॐ भू० धर्मशास्त्राणि आवाहयामि० ॥ ७ ॥ वायव्यपत्रे ॐ भू० अष्टादशपुराणानि आवाहयामि० ॥ ८ ॥ ऐशान्याम्ॐ भू० न्यायविस्तरानावाहयामि० ॥ ९ ॥ एवमावाह्य । ॐ मनोजूतिरितिप्रतिष्ठाप्य । तत्तन्नाममंत्रेण षोडशोपचारैःपूजयेत् । ततो ब्राह्मणान् संभोज्य स्वयंमुपोषणं कुर्यात् । एवं द्वादशमासस्य शुक्लप्रतिपत्सु संवत्सरं द्वादशवत्सराणि वा कृत्वा अंते उद्यापनं कार्यम् । तत्र प्रयोगः । अंतिमव्रतदिने प्रातः स्नात्वा नित्यकर्म समाप्य । देशकालौ स्मृत्वा ममात्मनः सांगविद्याप्राप्तिपूर्वकब्रह्मलोककामो ब्रह्मप्रीत्यर्थमाचरितविद्याव्रतस्य उद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनपुण्याहवाचनाचार्यवरणानि कृत्वा । सर्वतोभद्रमंडलमध्ये ताम्रकलशोपरि सौवर्णं ब्रह्माणं संस्थाप्य । ॐ ब्रह्मजज्ञानं० ॐ भूर्भुवःस्वः ब्रह्माणमावाहयामि स्थापयामि । इत्यावाह्य पुरुषसूक्तेन षोडशोपचारैः शुक्लगंधानुलेपनैर्भूषणैः पायसान्नेन च संपूज्य । आचार्याय सवत्सां गां दत्त्वा पायसान्नेन ब्राह्मणान्भोजयित्वा स्वयमपि भुंजीत । अन्यत्सर्वं पूर्ववत् ॥ इति विद्याप्रतिपद्व्रतोद्यापनप्रयोगः ॥ आथाचारप्राप्तरोटकसोमवारव्रतो

द्यापनम् ॥ हेमाद्रौ शिवपुराणे ॥ तत्र प्रयोगः ॥ तत्र श्रावणशुक्लप्रतिपत्सोमवारयुता यदा तदा श्रावणे प्रथमसोमवारे प्रारभ्य प्रत्यहं सार्धमासत्रयं कार्यम् ॥ तत्र देशकालौ संकीर्त्य । ममात्मनः सौभाग्य संपूर्णसंपत्तिप्राप्तिद्वारा श्रीसोमेश्वरप्रीत्यर्थं रोटकव्रतं करिष्ये । इति संकल्प्य । प्रत्यहं कार्तिकशुक्लचतुर्दशीपर्यंतं सोमेश्वरं सांबं कथाश्रवणपूर्वकं पंचामृतपुरःसरं नानापुष्पमाल्यादिभिर्बिल्वपत्रैश्च षोडशोपचारैः संपूज्य कार्तिकशुक्लचतुर्दश्यामुपोष्य रात्रौ पंचामृतपुरःसरं नानापुष्पादिभिःसंपूज्य प्रातः पुरुषाहारसंमितं रोटकपंचकं कृत्वा द्वौ ब्राह्मणाय एकं सोमेश्वराय चार्पयित्वा द्वौ स्वयं भुंजीत । एवं पचवर्षपर्य्यंतं कृत्वाऽन्ते वक्ष्यमाणोद्यापनविधिना उद्यापनं कुर्यात् । तद्यथा देशकालौ स्मृत्वा ममात्मनः अतुलधनसौभाग्यसंपत्त्यादिवृद्धिद्वारा श्रीभवानीशंकरप्रीतये पंचवर्षाचरितस्य रोटकव्रतस्य संपूणतासिद्धये तदुद्यापनं करिष्ये । इति संकल्प्य । तदंगत्वेन गणपतिपूजनं पुण्याहवाचनमाचार्यादिवरणं च पूर्ववत्कुर्य्यात् ॥ ततो वेद्यां लिंगतोभद्रमण्डलमध्ये ताम्रकलशोपरि राजतं सांबं सोमेश्वरं हेमरौप्यमयौ रोटकौ स्वर्णमयं बिल्वपत्रं च संस्थाप्य पुरुषसूक्तेन नाममंत्रेण वा षोडशोपचारैः संपूज्य शालितंडुलपिष्टेन पुरुषाहारमानतः रोटकान् निवेद्य । जंबीरनालिकेरक्रमुक

बीजपूरखर्जूरीद्राक्षादाडिमादिऋतुकालोद्भवैर्नानाफलैरर्घ्यं दत्त्वा कर्पूरेण नीराज्य प्रदक्षिणात्रयं दत्त्वा क्षमाप्य कथां श्रुत्वा आचार्यं संपूज्य व्रतपूर्तये तस्मै सवत्सां धेनुं प्रतिमां च सांगां दत्त्वा पायसान्नेन विप्रान् भोजयेत् । अन्यत्सर्वं पूर्ववत् ॥ इति रोटकव्रतोद्यापनम् ॥ आश्विनशुक्लप्रतिपदि दौहित्रेण मातामहश्राद्धं कार्यम् । तद्विधिस्तु मत्कृते गौडीयश्राद्धप्रकाशे द्रष्टव्यः । अत्र प्रतिपदि एव नवरात्रारंभः कार्यः । तत्प्रकारो घटस्थापनादिप्रयोगश्च मत्कृतेऽनुष्ठानप्रकाशे ज्ञेयः । कार्तिकशुक्लप्रतिपदि अन्नकूटं गोवर्धनोत्सवं च कुर्यात् ॥ इति पण्डितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे प्रतिपद्व्रतोद्यापनानि ॥ १ ॥ अथ द्वितीयाव्रतानि ॥ तावत्कार्त्तिकशुक्लद्वितीया यमद्वितीया भ्रातृद्वितीया च । तस्यां यमं सांगं यमुनां च पूजयेत् । तत्र प्रयोगः । प्रातः साभ्यंगं स्नात्वा । देशकालौ स्मृत्वा । आत्मनः अवैधव्यभ्रात्रायुष्यवृद्धिप्राप्तिकामनया यमपूजां करिष्ये । इति संकल्प्य । पटे चंदनादिना यमं चित्रगुप्तं यमदूतांश्च विलिख्य गंधादिभिः संपूज्य । भ्रातृभगिनीभिः यमायार्घो देयः । तत्र मंत्रः । एह्येहि मार्तंडज पाशहस्त यमांतकालोकधरामरेश । भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ॥ १ ॥ धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज । त्राहि मां किंकरैः सार्द्धं सूर्य

पुत्र नमोस्तु त ॥ २ ॥ अत्र भ्राता भगिनीं वस्त्रादिना प्रतोष्य तद्गृहे भुक्त्वा । ततः भगिनी आशिषः प्रार्थयेत् । मार्कंडेयो बलिर्व्यासो हनुमांश्च विभीषणः । कृपो द्रौणिः परशुराम एतेऽष्टौ चिर जीवनः ॥ १ ॥ मार्कंडेय महाभाग सप्तकल्पांतजीवन । चिरंजीवी यथा त्वं हि तथामे भ्रातरं कुरु ॥ २ ॥ अस्योद्यापनं प्रमाणाभावान्नोक्तम् ॥ इति यमद्वितीयाव्रतम् ॥ अथ तृतीयाव्रतोद्याप नानि ॥ तत्रादौ मत्स्यपुराणोक्तं सौभाग्यशयनव्रतम् ॥ तच्च चैत्रशुक्लतृतीयायां द्वादश अष्टौ सप्त वा वर्षपर्यन्तं कार्यम् । तद्यथा । प्रातःशुक्लतिलैः स्नात्वा । देशकालौ संकीर्त्य । ममाऽऽत्मनः भर्त्रासह एकशय्यासनशयनभोगसौभाग्यपुत्रपौत्राद्यभिप्राप्तये श्रीउमामहेश्वरप्रीत्यर्थं सौभाग्य शयनव्रतं करिष्ये । इति संकल्प्य । उमामहेश्वरयोः प्रतिमां सौवर्णीं पंचामृतपुरःसरं तत्तन्मंत्रेण संपूज्य । अंगपूजां कुर्यात् तद्यथा ॐ पाटलायै नमः शिवाय नमः पदौ पूजायामि १ ( एवं सर्वत्र ) जयायै० शिवाय० गुल्फौ पूजयामि २ त्रिगुणाय० भवान्यै नमः जंघायुग्मं पू० ३ रुद्राय० जयाययै० जानुनी पू० ४ हरिकेशाय० वरदायै० ऊरू० ५ ईशनाय रत्यै नमः कटी पू० ६ शूलिने० कोटरायै० कुक्षिद्वयं पू० ७ शूलपाणये० मंगलायै० उदरं० ८ सर्वात्मने० ईशान्यै०

कुचद्वयं ९ वेदात्मने० रुद्राण्यै० कंठं० १० त्रिपुरघ्नाय० विश्वायै० करद्वयं० ११ त्रिलोचनाय० कालानलप्रियायै बाहुद्वयं १२ सौभाग्यभवनायै० सर्पभूषणाय० कंठं० १३ स्वाहास्वधायै० ईश्वराय० मुखं १४ शूलिने० अशोकमधुवासिन्यै० ओष्ठौ० १५ स्थाणवे० चन्द्रमुखप्रियायै० मुखं० १६ अर्द्धनारीश्वराय० असितांग्यै० नासायुग्मं० १७ ॥उग्राय० ललितायै० भ्रूयुग्मं० १८ शर्वाय० देव्यै० कर्णद्वयं० १९ श्रीकंठाय० शिवायै० केशान्० २० भीमाय० सर्वात्मने० उग्रसौम्यरूपायै नमः शिरः पूजयामि २१ इति संपूज्य ॥ पुरतः सौभाग्याष्टकं स्थापयेत् ( घृतनिष्पावकुसुंभक्षीरजीरकतृणराजेक्षुलवणधान्यानि इति सौभाग्याष्टकम् ) एवं संपूज्य चैत्रे गोशृङ्गोदकं प्राश्य मल्लिकापुष्पं निवेद्य भूमौ स्वपेत् । पुनः प्रभाते संपूज्य देवं द्विजं दांपत्यं माल्यवस्त्रविभूषणैः संपूज्य सौभाग्याष्टकसंयुक्तं सुवर्णप्रतिमाद्वयं सदक्षिणाकं ललिता प्रीयतामिति वदन् ब्राह्मणाय दद्यात् । एवमेव प्रतिमासं तृतीयायां प्राशने दानमंत्रे पुष्पे च वक्ष्यमाणविधिना विशेषो ज्ञेयः । तद्यथा १ वैशाखे गोमयं प्राशयेत् । अशोक पुष्पं दत्त्वा विजया प्रीयतामिति विप्राय दद्यात् २ ( एवं सर्वत्र ज्ञेयम् ) ज्येष्ठे मंदारकुसुमं प्राश्य कमलं दत्त्वा भद्रा प्रीयताम् ३ आषाढे

बिल्वपत्रं कौसुंभं भवानी च ४ श्रावणे दधि नीलोत्पलं च कुमुदा ५ भाद्रपदे कुशोदकं मालतीपुष्पं शिवा च ६ आश्विने क्षीरं कुब्जकपुष्पं वास्तुदेवी च ७ कार्तिके नवनीतघृतं करवीरपुष्पं गौरी च ८ मार्गशीर्षे गोमूत्रं बाणपुष्पं मंगला च ९ पौषे घृतं चंपकपुष्पं कमला च १० माघे कृष्णतिलान् निर्गुंडीपुष्पं सती च ११ फाल्गुने पंचगव्यं प्राश्य जपापुष्पं समर्प्य उमा प्रीयतामिति च निवेदयेत् १२ पूर्वोक्तपुष्पाभावे जपाकुसुमं कौसुंभमालतीशतपत्रिकाकरवीरान्यतमं निवेदयेत् । एवं संवत्सरपर्य्यंतमुपोष्य व्रतान्ते उद्यापनं कुर्यात् । तद्यथा । देशकालौ संकीर्त्य ममात्मनः भर्त्रा सह सर्वकामफलाभिपूर्वकमानन्त्यपदप्राप्तिकामः पूर्वाचरितसौभाग्यशयनव्रतोद्यापनं करिष्ये इति संकल्प्य लिङ्गतोभद्रमंडले सर्वोपस्करसंयुते शयने हैममुमामहेश्वरं गोयुग्मं च संस्थाप्य षोडशोपचारैः संपूजयेत् । ततो वस्त्रादिना ब्राह्मणान् संपूज्य । सुखसंतानवृद्ध्यर्थं शयनं ते द्विजोत्तम ॥ ददामि व्रतपूर्त्यर्थं प्रीयेतां मे ह्युमेश्वरौ ॥ १ ॥ इत्याचार्याय सोपकरां शय्यां प्रतिमायुतां गां सवत्सां च दत्त्वा ब्राह्मणान् सदन्नेन संभोज्य आशिषो गृहीत्वा स्वयं भुञ्जीत । एवं करोति यः सम्यक् सौभाग्यशयनव्रतम् ॥ सर्वान्कामानवाप्नोति पदमानंत्यमश्नुते ॥ १ ॥ यस्तु द्वादश वर्षाणि

सौभाग्यशयनव्रतम् ॥ करोति सप्त चाष्टौ वा श्रीकंठभवनेऽमरैः ॥ पूज्यमानो वसेत्सम्य ग्यावत्कल्पायुतत्रयम् ॥ २ ॥ इति सौभाग्यशयनव्रतोद्यापनम् ॥ अस्यामेव चैत्रशुक्लतृतीयायां गणगौरीव्रतम् ॥ तदुक्तं देवीपुराणे ॥ चैत्रशुक्लतृतीयायां गौरीमीश्वरसंयुताम् ॥ संपूज्य दोलोत्स वकं कुर्यान्नारी शुभेप्सुका ॥ १ ॥ निर्णयामृते च । तृतीयायां यजेद्देवीं शंकरेण समन्विताम् ॥ कुंकु मागुरुकर्पूरमणिवस्त्रासुगंधकैः ॥ २ ॥ स्रग्गंधधूपदीपैश्च दमनेन विशेषतः ॥ तत आंदोल येद्वत्स शिवोमातुष्टये सदा ॥ ३ ॥ रात्रौ जागरणं कुर्यात्प्रातर्देया तु दक्षिणा ॥ सौभाग्याय सदा स्त्रीभिः कार्या पुत्रसुखेप्सुभिः ॥ ४ ॥ इयं च पराग्राह्या ॥ अथास्मद्देशीयसदा चारप्राप्तं गणगौरीव्रतविधानम् ॥ तच्च होलिकाद्वितीयदिनादारभ्य चैत्रशुक्लतृतीयापर्य्यंतं सौभाग्यकामनया सौभाग्यवतीभिः कन्यकाभिश्च पूजात्मकं व्रतं कार्यम् ॥ तद्यथा ॥ उषस्यु थाय कन्याभिः सह नानोत्सवगीतैर्युता अरण्ये गत्वा यथादेशकालोद्भवपुष्पाणि दूर्वांकुरांश्च गृहीत्वा स्वगृहमागत्य कुंभकारमृत्तिकया तीर्थमृत्तिकया च गौरीश्वरप्रतिमाद्वयं निर्माय मणिव स्त्रमाल्यभूषणादिभिः सुशोभितं कृत्वा प्रतिदिनं प्रातर्नानागीतोत्सवपूर्वकमुद्धृतकूपतडागनदीजलेन

कुंकुमाक्षतपुष्पदूर्वांकुरादिभिश्च संपूजयेत् । ततश्चैत्रशुक्लतृतीयायां राजकीयबृहद्गौरीश्वरप्रतिमाद्व
येन युतां कृत्वा वाद्यादिभिः सह ग्रामं प्रदक्षिणीकृत्य स्वपूजितप्रतिमाद्वयं यथालाभजलाशये
निक्षिपेत् । इदं पूजात्मकं व्रतं युवतीभिः कन्याभिश्च विवाहात्प्रथमवर्षपर्य्यंतं कृत्वा । तृतीयायां स
र्वाभिः सौभाग्यवतीभिर्महोत्सवं पूजां च कुर्यात् । एवं वरणपर्य्यंतं पूजात्मकं व्रतं कृत्वा यदाकदा तस्यो
द्यापनं कार्य्यम् । उद्यापने तु षोडशसौभाग्यवत्यो भोजनीयाः । ताभ्यो वस्त्राणि सौभाग्यद्रव्याणि च
दद्यात् । इदं पूजनं मलमासेपि कार्यम् । इति गणगौरीव्रतविधानम् ॥ अथ चैत्रशुक्लतृतीयायामरुंधतीं
व्रतोद्यापनम् । स्कांदे । पूर्वं त्रिरात्रोपवासं कृत्वा चैत्रशुक्लतृतीयायां प्रातरुत्थाय नित्यकर्म समाप्य ।
देशकालौस्मृत्वा । ममात्मनः इह जन्मनि जन्मांतरे च बालवैधव्यनाशार्थमनेकसौभाग्यपुत्रपौत्रा
वाप्तिकामनया पूर्वाचरितारुंधतीव्रतस्योद्यापनं करिष्ये । इति संकल्प्य । गणेश पूजनं पुण्याहवाचनं
च कृत्वा आचार्यादीन् वृत्वा सर्वतोभद्रमंडले ब्रह्मादिदेवान् संपूजयेत् । ततो जीरकपुंजे लवणान्विते
वस्त्रयुग्मवेष्टिते ताम्रकलशं संस्थाप्य तत्र सुवर्णमयीमरुंधतीं गौरीवसिष्ठध्रुवाणां सुवर्णप्रतिमाचतुष्टयं
संस्थाप्य तत्तन्नाममंत्रेण षोडशोपचारैः पूजयेत् । अथावरणपूजा । ॐ देववंद्यै नमः पादौ पूजयामि १

लोकवंद्यै नमः जानुनी पू० २ सर्वसंपत्तिदायिन्यै नमःकटी०३ गंभीरनाम्न्यै० नाभिं०४ लोकधात्र्यै० स्तनौ० ५ जगद्धात्र्यै० स्कंधौ० ६ शांत्यै नमः बाहू० ७ वरदायै० हस्तौ० ८ धृत्यै० मुखं० ९ अरुंधत्यै नमः शिरः पूजयामि १० सकलप्रियायै० सर्वांगं पूजयामि ११ एवं संपूज्य । अर्घ्यं दद्यात् । अरुंधति महाभागे वसिष्ठप्रियवादिनि ॥ सौभाग्यं देहि मे देवि धनपुत्रांश्च सर्वदा ॥ १ ॥ पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते ॥ अन्यांश्च सर्वकामांश्च देहि देवि नमोस्तु ते ॥ २ ॥ इति प्रार्थ्य सुवासिनीः संपूज्य प्रातः होमं कुर्यात् । अत्र प्रधानम् । अरुंधत्यै समित्तिलाहुतिभिर ष्टोत्तरशतं प्रार्थनामंत्रेण । ततःगौरीवसिष्ठध्रुवेभ्यः नाममंत्रेण प्रत्येकमष्टाविंशतिसंख्याकाहुतीः ब्रह्मा दिसर्वतोभद्रदेवताभ्य एकैकाज्याहुतिं च हुत्वा होमशेषं समाप्य । आचार्यं संपूज्य सवत्सां धेनुं घृतपूरितकांस्यपात्रं सदीपकं शय्यावस्त्राण्याभरणानि च दद्यात् । ततश्चतुर्विंशतिर्द्वादश यथाशक्ति वा मिथुनानि संभोज्य तेभ्यो मोदकपोलिकापूरिकावटकघृतपूपपक्वान्नपूरितं सवस्त्रं सशूर्पं वायनं प्रत्येकं दद्यात् । ततः दीनानाथांश्च संपूज्य बांधवैः सह स्वयमपि भोजनं कुर्यात् ॥ इति अरुंधती व्रतोद्यापनप्रयोगः ॥ अथ परशुरामजयंतीव्रतोद्यापनप्रयोगः ॥ तच्च वैशाखशुक्लतृतीयायां निशाद्ययाम

व्यापिन्यां कार्यम् । देशकालौ संकीर्त्य ममखिलपापक्षयपूर्वकं चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वर
प्रीत्यर्थम् आचरितपरशुरामजयंतीव्रतोद्यापनं करिष्ये इति संकल्प्य । गणेशपूजाद्याचार्यवरणांतं कर्म
कृत्वा । सर्वतोभद्रमंडलमध्ये ताम्रकलशोपरि हैमं परशुरामम् । ॐ विष्णोर्नुकं० इति मंत्रेणावाह्य
षोडशोपचारैः संपूज्य रात्रौ जागरणं कृत्वा प्रातरग्निं प्रतिष्ठाप्य परशुरामाय पूर्वोक्तमंत्रेण घृताक्तपा
यसद्रव्येण अष्टोत्तरसंख्यया ब्रह्मादिसर्वतोभद्रदेवताभ्यश्च एकैकयाज्याहुत्या होमं कृत्वा पीठं गां
चाचार्याय दत्त्वा ब्राह्मणान् भोजयेत् । इति परशुरामजयंतीव्रतोद्यापनम् ॥ अथ श्रावणशुक्लतृतीया
यां स्वर्णगौरीव्रतोद्यापनप्रयोगः ॥ गोचर्ममात्रां पृथ्वीं गोमयेन विलिप्य तत्र नानावर्णं सुशोभनं
मंडपं कृत्वा ऐशान्यां ग्रहवेदीं तत्पार्श्वे प्रधानवेदीं च निर्माय तत्र पंचवर्णैरष्टदलं कमलं विलि
खेत् । श्रावणशुक्लतृतीयायां प्रातः शुक्लतिलैः स्नात्वा नित्यकर्म्म समाप्य । देशकालौ संकीर्त्य ।
ममात्मनः सौभाग्यादिपुत्रसंपत्तिकामनया आचरितस्वर्णगौरीव्रतोद्यापनं करिष्ये । इति संकल्प्य ।
गणेशपूजनपुण्याहवाचनाद्याचार्यवरणांतं कर्म कुर्यात् । ततो लिंगतोभद्रमंडले ताम्रकलशं
यथाविधि संस्थाप्य तत्र तिलपूरितताम्रपात्रं निधाय तदुपरि कर्षमात्रसुवर्णेन निर्मितहरगौरीप्रतिमा

व्र०
॥५०॥

द्वयं वेदमंत्रैः प्रतिष्ठाप्य पंचामृतेन संस्नाप्य षोडशोपचारैः संपूजयेत् । ततः गीतनृत्यपुराणपठना दिना रात्रिं निनाय प्रातरग्निं प्रतिष्ठाप्य ग्रहहोमं कृत्वा । ॐ त्र्यंबकंयजामहे० १ इति मंत्रेण शिवाय । ॐ गौरीर्मिमायेति गौर्य्यै च तिलयवाज्यादिभिः प्रत्येकमष्टोत्तरशतमष्टाविंशतिंवा हुत्वा लिंगतोभद्रदेवताभ्य एकैकामाज्याहुतिं च हुत्वा होमं समापयेत् । ततः आचार्याय सवत्सां पय स्विनीं सोपस्कारां धेनुं दत्त्वा षोडश दंपतीः षोडशप्रकारैः पक्वान्नैः संपूज्य वंशपात्रे पक्वान्नं षोडश प्रकारं कृत्वा वायनं दत्त्वा तेभ्यो दक्षिणां दत्त्वापरेहनि बंधुभिः सह भुंजीत । इति स्कांदोक्तस्वर्गगौरीव्र तोद्यापनप्रयोगः ॥ अथ सुकृतफलतृतीयाव्रतम् ॥ तच्च श्रावणशुक्लतृतीयायां हस्तनक्षत्रयुतायां कार्यम् । अथोद्यापनप्रयोगः ॥ देशकालौ संकीर्त्य । मम अखिलपापक्षयपूर्वकपुत्रपौत्रधनसौभाग्याद्यभिवृद्धि द्वारा लक्ष्मीनारायणप्रीतये वर्षत्रयाचरितस्य सुकृतफलव्रतस्य संपूर्णतासिद्धये तदुद्यापनाख्यं कर्म करिष्ये । इतिसंकल्प्य गणेशपूजनाद्याचार्यवरणांतं कर्म कुर्य्यात् । ततः आचार्यः सर्वतोभद्रस्थ कलशोपरि हैमं विष्णुं तद्वामे लक्ष्मीं च । ॐ विष्णोर्नुकं० १ श्रीश्चते लक्ष्मीश्च० २ इति मंत्रद्वयेन षोडशोपचारैः संपूज्य सुवर्णफलयुतं वंशपात्रस्थवाणकं पुरतः स्थाप्य जागरणादिना रात्रिं

निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ग्रहहोमं कृत्वा । प्रधानदेवाविष्णुलक्ष्मीभ्यां पूर्वोक्तमंत्रद्वयेन तिलसर्पिर्भ्यामष्टोत्तरशतद्वयं होमं सर्वतोभद्रमंडलदेवताभ्यश्च एकैकाज्याहुतिं जुहुयात् । तत आचार्यं संपूज्य प्रतिमायुतं कलशं कपिलां सोपस्करां गां च दद्यात् वायनं च दद्यात् । ततः पंचामृतशर्करामिश्रितगोधूमचूर्णेन उदुंबरवृक्षस्य फलसदृशानि षष्ट्यधिकशतत्रयपरिमितानि सुकृतफलानि कृत्वा तावंति च ससौवर्णानि वस्त्राणि दक्षिणासौभाग्यद्रव्ययतांबूलयुतानि पायसपूर्णकांस्यपात्रसहितानि परिकल्प्य दद्यात् । तत्र मंत्रः । लक्ष्मीनारायणो देवो ह्यस्मात्संसारसागरात् ॥ रक्षेद्वै सकलात्पापादिह सर्वं ददातु मे ॥ १ ॥ अच्युतः प्रतिगृह्णाति अच्युतो वै ददाति च ॥ अच्युतस्तारकोभाभ्यामच्युताय नमोनमः ॥ २ ॥ ततश्चतुर्विंशतिं ब्राह्मणान् सदन्नेनसंतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ इति भविष्योक्तसुकृतफलव्रतोद्यापनप्रयोगः ॥

अथ हरितालिकाव्रतोद्यापनम् ॥ तच्च भाद्रपदशुक्लतृतीयायां कार्यम् । तत्र प्रयोगः । तृतीयायां प्रातस्तिलामलककल्केन स्नात्वा । पट्टवस्त्रं परिधाय पूर्वरचितमंडपे प्राङ्मुख उपविश्य देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकसप्तजन्मराज्याखंडितसौभाग्यादिविविधभोगप्राप्तिद्वारा श्रीमदुमामहेश्वरप्रीत्यर्थमाचरित

हरितालिकाव्रतोद्यापनं करिष्ये इति संकल्प्य । गणेशपूजनपुण्याहवाचनादि आचार्यवरणांतं पूर्व-
वत् कर्म कुर्य्यात् । ततः आचार्यो द्रोणपरिमितव्रीहिकृतपुंजे लिंगतोभद्रमंडलं विलिख्य तन्मध्ये ताम्रक
लशोपरि राजतं शिवं हैमीं गौरीं च पुरतः राजतं वृषभं तत्तन्मंत्रेण प्रतिष्ठाप्य पुरुषसूक्तेन पंचा
मृतेन षोडशोपचारैश्च संपूज्य प्रार्थयेत् । तत्र मंत्रः । मंदारमालाकुलितालकायै कपालमालांकितशे
खराय ॥ दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय ॥ १ ॥ नमःशिवाय सांबाय
पंचवक्त्राय शूलिने ॥ नंदिभृंगिमहाकालगणयुक्ताय शंभवे ॥ २ ॥ शिवायै हरकांतायै प्रकृत्यै सृष्टि
हेतवे ॥ नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमोनमः ॥ ३ ॥ येन कामेन देवि त्वं पूजितासि महेश्वरि ॥ तं
पूर्णं कुरु मे कामं सौभाग्यं च प्रयच्छ मे ॥ ४ ॥ ततः सुवासिनीपूजां कृत्वा कथाश्रवणपूर्वकं
रात्रौ जागरणं कुर्य्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ग्रहहोमं कृत्वाप्रधानदेवाय उमा
महेश्वराय । ॐ त्र्यंबकंयजामहे० १ गौरीर्मिमाय २ इति मंत्रद्वयेन तिलयवाज्यमष्टोत्तरशत
संख्याकाभिर्हुत्वा लिंगतोभद्रमंडलदेवताभ्यश्च ऐकैकाज्याहुतिं हुत्वा होमशेषं समापयेत् । ततः सु
वर्णरत्नवासोभिराचार्यं संपूज्य सोपस्करां धेनुं शय्यां च आचार्याय दत्त्वा षोडशद्विजयुग्मानि सु

पक्वान्नैः संभोज्य सौभाग्यद्रव्यावस्त्रदक्षिणायुतानि षोडशवंशपात्राणि तेभ्यो दद्यात् । तत्र मंत्रः । सौ भाग्यारोग्यकामानां सर्वसंपत्समृद्धये । गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् ॥ इति मंत्रेण प्रत्येकं दत्त्वा अन्येभ्यो भूयसीं दक्षिणां दत्त्वा बंधुभिः सह भुञ्जीत ॥ इति स्कांदोक्तहरितालिकाव्रतोद्यापन प्रयोगः ॥ अथ बृहद्गौरीव्रतोद्यापनप्रयोगः ॥ चंद्रोदयव्यापिन्यां भाद्रकृष्णतृतीयायां देशकालौ संकी र्त्य इह जन्मनि जन्मांतरे चाक्षय्यसौभाग्यपुत्रपौत्रधनधान्यैश्वर्यादिप्राप्त्यर्थमाचरितबृहद्गौरीव्रतोद्या पनं करिष्ये । इति संकल्प्य गणेशपूजादि आचार्यवरणांतं कर्म कुर्यात् । ततः । उक्तप्रकारेण आ लवाले सांगं बृहतीवृक्षं संस्थाप्य संपूज्य तत्पुरतः पीठे हैमीमुमाम् ॐ गौरीर्मिमाय० १ इति मंत्रेण षोडशोपचारैः संपूजयेत् । तत्पुरतः चतुःषष्टि ( ६४ ) बीजयुतं सौवर्णं बृहतीफलं संस्थाप्य संपूज्य । अर्घ्यं दद्यात् । तत्र मंत्रः । क्षेमसंपत्करे देवि सर्वसौभाग्यदायिनि । सर्वकामप्रदे देवि गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ ततश्चंद्रोदये चंद्रमसे अर्घ्यदानम् । गगनांगणसंदीप लक्ष्मीबंधो निशाकरागृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥ १ ॥ ततः ( होमः कृताकृतः ) पंचविप्रान् सुवासिनीः संपूज्य वस्त्रालंका रकंचुकीताटंककंठसूत्रहरिद्रासौभाग्यद्रव्यसिंदूरजीरकगोधूमपिष्टकृतबृहतीफलपंचकयुतानि पंचवंश पात्राणि ५

सूत्रैः वेष्टितानि वायनानि कृत्वा ताभ्यो दत्त्वा आचार्याय गां च दत्त्वा ब्राह्मणान्संतर्प्य तत्सु वर्णनिर्मितबृहतीफलं कंठे धृत्वा इष्टजनैः सह भुञ्जीत । प्रातः गौरीं विसर्ज्जयेत् ॥ इति कर्णाटकदे शप्रसिद्धबृहद्गौरीव्रतोद्यापनप्रयोगः समाप्तः ॥ अथ मार्गशीर्षे माघे वा कृष्णतृतीयायां चतुर्थीयुतायां सौभाग्यसुंदरीव्रतम् ॥ भविष्योत्तरे ॥ देशकालौ स्मृत्वा । मम इह जन्मनि जन्मांतरे च सर्वदुःख व्याधिदारिद्र्यादिनाशनपूर्वकसुखभाग्यपुत्रपौत्रसुरूपतादिप्राप्तिद्वारा गौरीप्रीत्यर्थं सौभाग्यसुंदरी व्रतं करिष्ये इति संकल्प्य गणेशपूजादि आचार्यवरणांतं कृत्वा एकलिंगतोभद्रमण्डले सौवर्णं राज तं वा उमामहेश्वरं वक्ष्यमाणद्रव्यैर्द्वादशमासेषु प्रतिकृष्णतृतीयायां संपूजयेत् । तद्यथा । मार्गशीर्ष कृष्णतृतीयायां प्रातः अपामार्गकाष्ठेन दंतधावनं कृत्वा नद्यादौ स्नात्वा उपवासं कुर्यात् । तत्र प्रार्थ नामंत्रः । उमे देवि नमस्तुभ्यं शंकरस्यार्द्धधारिणि । प्रसीद श्रीमहेशानि करिष्ये व्रतमुत्तमम् ॥ सान्निध्यं कुरु मे देवि व्रतेस्मिन् हरवल्लभे । इति प्रार्थ्य सौभाग्यसुंदरीदेवतायै नम इति नाममंत्रेण गंधादिभिर्द्रो णपुष्पैश्च मोदकनैवेद्येन यक्षकर्द्दमलेपन अगरुधूपघृतदीपादिभिश्च संपूज्य दाडिमफलयुतजलेन अर्घ्यं दद्यात् ॥ १ ॥ एवं पूजां कृत्वा स्वयं कर्पूरमात्रं प्राशयेत् ( एष एव विधिःसर्वासुतृतीयासु ज्ञेयः ) विशे

षस्तुवक्ष्यते । पौषमासे वेल्लिकादंतकाष्ठं राज्यसौभाग्यदादेवी मरुवकपुष्पं धात्रीफलेनार्घ्यं घृतशर्करान्वितवटकानैवेद्यं च समर्प्य स्वयं कंकोलजलं प्राशयेत् ॥ २ ॥ माघे बदरीदंतकाष्ठं रूपसौभाग्यसुन्दरी नाम चूतपुष्पं नारीकेलेनार्घ्यं शष्कुलीनैवेद्यं कस्तूरीभक्षणम् ॥ ३ ॥ फाल्गुने बिल्वदंतकाष्ठं सौभाग्यसुन्दरीनाम कांचनारपुष्पं घृतशर्करान्वितसक्तुनैवेद्यं बीजपूरेणार्घ्यं चंदनोदकप्राशनम् ॥ ४ ॥ चैत्रे जंबूदंतकाष्ठं सुखसौभाग्यसुन्दरी नाम दमनकपुष्पं शर्कराघृतयुतमंडकनैवेद्यं बिल्वफलेनार्घ्यम् अर्जुनपत्रभक्षणम् ॥ ५ ॥ वैशाखे मालतीदंतकाष्ठं पतिसौभाग्यदा नाम सितारक्तपद्ममल्लिकापुष्पं शर्करा घृतकर्पूरयुतदधिभक्तनैवद्यं कदलीफलेनार्घ्यं सुवर्णोदकप्राशनम् ॥ ६ ॥ ज्येष्ठे यूथिकादंतकाष्ठंलावण्यसुभगा नाम कदलीफलेनार्घ्यं घृतपूरिका नैवेद्यं मौक्तिकांबुप्राशनम् ॥ ७ ॥ आषाढे अशोककाष्ठं पतिसौभाग्यसुंदरीदेवता बिल्वपत्रं जंबूफलार्घ्यं पायसनैवेद्यं विद्रुमांबुप्राशनम् ॥ ८ ॥ श्रावणे बिल्वकाष्ठं सर्वेश्वरी नाम जातीपुष्पं शुभ्रकसारनैवेद्यं कदलीफलार्घ्यं रजतांबुप्राशनम् ॥ ९ ॥ भाद्रे मातुलुंगकाष्ठं सौभाग्यसुंदरी नाम उत्पलपुष्पं कर्कोटकीफलेनार्घ्यं शाकवर्तिन्यं नैवेद्यं माणिक्यांबुप्राशनम् ॥ १० ॥ आश्विने प्लक्षकाष्ठं पुत्रसौभाग्यसुंदरी नाम शतपत्रपुष्पं नारिंगकूष्मांडार्घ्यं घृतशर्करा

युतं गणकनैवेद्यम् औदुंबरांबुप्राशनम् ॥ ११ ॥ कार्तिके औदुंबरकाष्ठं संयोगसुंदरी नाम केतकीपुष्पं सुगंधिशालिनैवेद्यम् अक्रौडेनार्घ्यं लवंगोदकप्राशनम् ॥ १२ ॥ एवं चीर्णे व्रते मार्गकृष्णतृतीयां यामु द्यापनं कार्य्यम् ॥ अथोद्यापनप्रयोगः । देशकालौ स्मृत्वा ममात्मनः अक्षय्ययसुखसौभाग्यपुत्र पौत्रादिप्राप्तिद्वारा गौरीप्रीतये पूर्वाचरितसौभाग्यसुन्दरीव्रतोद्यापनं करिष्ये । इति संकल्प्य । गणेशपूजनाद्याचार्यवरणांतं कर्म कुर्य्यात् । ततः पूर्वोक्तमंडले ताम्रकलशोपरि उमामहेश्वरमूर्तिं पूर्वं पूजितां रक्तवस्त्राद्युपचारैः संपूज्य प्रागुक्तपुष्पादिकं समर्प्य जागरणादिना रात्रिं निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ग्रहहोमं कृत्वा प्रधानदेवमहेश्वराय मधुत्रययुक्तैः कुसुंभकुसुमैः किंशुकैर्वा शतपत्रैर्वाऽष्टोत्तरशतसंख्याकाहुतिभिः स्वस्वमंत्रेण प्रत्येकं हुत्वा लिंगतोभद्र देवताभ्यश्च एकैकया आज्याहुत्या हुत्वा होमशेषं समापयेत् । ततोऽष्टौ चत्वारि वा मिथुनानि वस्त्रादिभिः संपूज्य तेभ्यः कुंकुमलवणगुडनारीकेलनागवल्लीदूर्वाकज्जलसिंदूराष्टकं वंशमात्रस्थं दत्त्वा आचार्याय प्रतिमां सांगां गां च दत्त्वा प्रार्थयेत् । पूजितासि मया देवि सर्वसौभाग्यसुंदरि ॥ दत्त्वा मत्प्रार्थितान्कामान्गच्छ देवि यथासुखम् ॥ १ ॥ ततः ततः सदन्नेन ब्राह्मणान्संतर्प्य आशिषो

गृहीत्वा स्वयं भुंजीत ॥ इति सौभाग्यसुंदरीव्रतोद्यापनप्रयोगः ॥ इति पण्डितश्रीचतुर्थीलालविरचिते उद्यापनप्रकाशे तृतीयाव्रतोद्यापनानि समाप्तानि ॥ ॥ अथ चतुर्थीव्रतोद्यापनानि ॥ तत्रादौ संकटनाशनचतुर्थीव्रतम् । तच्च भाद्रपदकार्तिकमाघादिषु कार्यम् । अथ उद्यापनप्रयोगः ॥ पूर्वोक्तमासेषु कृष्णचतुर्थ्यां प्रातर्नद्यादौ स्नात्वा नित्यावश्यकं समाप्य । देशकालौ संकीर्त्य । ममात्मनः विद्याधनपुत्रपौत्रशरीरारोग्यादिप्राप्त्यर्थं समस्तसंकटनिवृत्त्यर्थं श्रीगणेशप्रीत्यर्थं पूर्वाचरितसंकटचतुर्थीव्रतोद्यापनं करिष्ये । इति संकल्प्य पूर्वोक्तमाचार्यवरणांतं कर्म कुर्यात् । ततः सर्वतोभद्रमण्डलमध्ये ताम्रकलशोपरि हैमं गणपतिं राजतं चन्द्रमसं च प्रतिष्ठाप्य पुरुषसूक्तेन षोडशोपचारैःपूजयेत् । तद्यथा । लंबोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकम् । नानारत्नैः सुवेषाढ्यं प्रसन्नास्यं विचिंतयेत् ॥ इति ध्यानम् ॥ ॐ गजास्याय नमः आवाहनम् १ विघ्नराजाय० आसनम् २ लंबोदराय० पाद्यम् ३ शंकरसूनवे० अर्घ्यम् ४ उमासुताय० आचमनीयम् ५ वक्रतुंडाय० पंचामृतस्नानम् ६ हेरंबाय० स्नानम् ७ शूर्पकर्णाय० वस्त्रम् ८ कुब्जाय० यज्ञोपवीतम् ९ गणेश्वराय० गंधम् १० विघ्ननाशिने नमः पुष्पाणि ११

अनेनैव नाम्ना दूर्वाकुंकुमाक्षतान्दद्यात् । अथांगपूजा । गणेश्वराय नमः पादौ पूजयामि । विघ्नराजाय० जानुनी पू० । आखुवाहनाय० ऊरू पू० । हेरंबाय० कटी पू० । कामारिसूनवे० नाभिं० पू० । लंबोदराय० उदरं पू० । गौरीसुताय० स्तनौ पू० । गणनायकाय० हृदयं पू० । स्थूलकंठाय० कंठं पू० । स्कंदाग्रजाय० स्कंधौ पू० । पाशहस्ताय० हस्तौ पू० । गजवक्त्राय० वक्त्रं पू० । विघ्नहर्त्रे० ललाटं पू० । सर्वेश्वराय० शिरः पूजयामि । श्रीगणाधिपाय० सर्वांगं पूजयामि इत्यंगपूजा ॥ ततः विकटाय नमः धूपम् १२ वामनाय० दीपम् १३ सर्वदेवाय० दशमोदकनवेद्यम् १४ आचमनं च । सर्वार्तिनाशिने० फलम् १५ विघ्नहर्त्रे० तांबूलम् १६ सर्वेश्वराय० दक्षिणाम् १७ एकदंताय० नीराजनम् १८ हरसूनवे० प्रदक्षिणात्रयम् १९ कुमाराय नमस्कारम् २० नमो विद्याधरायचेति पुष्पांजलिं समर्प० २१ एवं संपूज्य रक्तवस्त्रवेष्टितं पायसपूर्णं शूर्पं वंशपात्रं वा गणेशाय निवेद्य चंद्रोदये चंद्रं षोडशोपचारैः संपूज्य यथाविधि अर्घ्यं दद्यात् । क्षीरसागरसंभूत सुधारूप निशाकर । गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥ १ ॥ ॐ रोहिणीसहितचंद्रमसे नमः अर्घ्यं समर्पयामि । गणेशाय नमस्तुभ्यं सर्वसिद्धिप्रदायक । संकटं हर मे देव गृहाणार्घ्यं नमो

स्तुते ॥ १ ॥ कृष्णपक्षे चतुर्थ्यां तु पूजितोसि विधूदये । क्षिप्रप्रसादितो देव गृहाणार्घ्यं नमोस्तुते ॥ २ ॥ संकटहरणगणेशाय० इदमर्घ्यम् ॥ तिथीनामुत्तमं देवि गणेशप्रियवल्लभे । सर्व संकटनाशाय चतुर्थ्यर्घ्यं नमोस्तु ते १ ॥ इति चतुर्थ्यै अर्घ्यं दद्यात् ॥ ततस्तदानीं पंचम्यां वा होमं कुर्यात् ।प्रधानदेवगणेशाय । ॐ गणानांत्वा० इतिमंत्रेण तद्गायत्र्या वा ( इक्षवः सक्तवो रंभाफलानि चिपटास्तिलाः । मोदका नारिकेलानि लाजा द्रव्याष्टकं स्मृतम् ॥ इति ) अष्टद्रव्यैर्वा दूर्वारक्ताक्षताज्यमोदकपायसद्रव्यैरष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिंवाहुतीर्हुत्वा सर्वतोभद्रदेवताभ्यश्च केवलमाज्यं मोदकं वा एकैकाहुतिं च हुत्वा होमशेषं समापयेत् । एकविंशतिं ब्राह्मणान् वक्ष्यमाणैकविंशतिनामभिः वस्त्रादिना संपूज्य एकविंशतिपक्वान्नैर्मोदकैर्वा संतर्पयेत् ( एकविंशति नामानि ) गणंजयाय नमः १ गणपतये० २ हेरम्बाय० ३ धरणीधराय० ४ महागणपतये० ५ यक्षेश्वराय० ६ क्षिप्रप्रसादनाय० ७ अमोघसिद्धये० ८ अमृताय० ९ मंत्राय० १० चिंतामणये० ११ निधये० १२ सुमङ्गलाय० १३ बीजाय० १४ आशापूरकाय० १५ वरदाय० १६ शिवाय० १७ काश्यपाय १८ नंदनाय० १९ वाचांसिद्धये० २० ढौंढीनायकाय नमः ॥ २१ ततः आचार्याय

शूर्पस्थैकविंशतिमोदकवायनं दद्यात् । तत्र मंत्रः । विप्रवर्य नमस्तुभ्यं मोदकान्वै ददाम्यहम् । आपदुद्धरणार्थाय गृहाण द्विजसत्तम ॥ १ ॥ ततो गणेशं प्रार्थयेत् । अबुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम् । तत्सर्वं पूर्णतां यातु विघ्नराज नमोस्तु ते ॥ १ ॥ ततो गां सोपस्करं पीठं शय्यां च आचार्याय दत्त्वा आशिषो गृहीत्वा बांधवैः सह भुञ्जीत ॥ इति संकटचतुर्थीव्रतोद्यापनप्रयोगः ॥ अथ दूर्वागणपतिव्रतोद्यापनप्रयोगः ॥ ( श्रावणे कार्त्तिके वा शुक्लचतुर्थ्यां दूर्वागणपतिव्रतं पंचवर्षपर्यंतं कार्यम् ) देशकालौ स्मृत्वा । ममात्मनः अतुलसौभाग्यपुत्रपौत्रधनैश्वर्याद्यभिवृद्धिद्वारा श्रीगणपतिप्रीत्यर्थं दूर्वागणपतिव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं कर्म कुर्यात् । ततः सर्वतोभद्रस्थरक्तवस्त्रवेष्टितताम्रकलशे हेमपीठे हैमीं दूर्वां निधाय तत्र हैमं गणपतिं प्रतिष्ठाप्य षोडशोपचारैर्बिल्वापामार्गशमीदूर्वातुलसीपत्रैर्मोदकनैवेद्येन च संपूजयेत् । पंचगव्यस्नपने विशेषः । तत्र दशमंत्राः । गणाधिपाय नमः १ उमापुत्राय० २ अघनाशिने० ३ विनायकाय । ४ ईशपुत्राय० ५ सर्वसिद्धिप्रदाय० ६ एकदंताय ७ इभवक्राय० ८ मूषकवाहनाय० ९ कुमारगुरवे नमः १० एतैर्दशमंत्रैर्दूर्वायुक्तपंचामृतेन पूजयेत् । प्रार्थनामंत्रः ।

गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन । व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन ॥ १ ॥ इति प्रार्थ्य । आचार्याय प्रतिमां सोपस्करां गां च दद्यात् । प्रतिमादाने मंत्रः । गृहाण भगवन्ब्रह्मन् गणराजं सदक्षिणम् । व्रतं त्वद्वचनादद्य संपूर्णं यातु सुव्रत ॥ १ ॥ ततो ब्राह्मणभोजनं स्वयं भोजनं च कार्यम् ॥ इति दूर्वागणपतिव्रतोद्यापनम् ॥ अथ भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रतोद्यापनम् ॥ तस्य प्रयोगः स्कांदभविष्ययोः ॥ माघे मार्गशीर्षे श्रावणे वा भाद्रे प्रतिमासं शुक्लचतुर्थ्यां प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देशकालौ संकीर्त्य । मम इह जन्मनि जन्मनि जन्मांतरे च पुत्रपौत्रधनविद्याजययशःश्रीप्राप्त्यर्थमायुष्याभिवृद्ध्यर्थं सिद्धिविनायकप्रीत्यर्थं च सिद्धिविनायकव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत् कर्म कुर्यात् । ततः सर्वतोभद्रे धान्यराशिस्थरक्तवस्त्रवेष्टितताम्रकलशे हैमं गणेशं राजतं चंद्रमसं च पुरुषसूक्तेनानाममंत्रैश्च षोडशोपचारैः पंचामृतैश्च पूजयेत् । पुष्पांते अंगपूजा कार्या । ॐ गणेश्वराय नमः पादौ पूजयामि १ विघ्नराजाय० जानुनी० २ आखुवाहनाय० ऊरू पू० ३ हेरंबाय० कटी पू० ४ कामारिसूनवे० नाभिं पू० ५ लंबोदराय० उदरं पू० ६ गौरीसुताय० स्तनौ पू० ७ गणनायकाय० हृदयं पू० ८ स्थूलकर्णाय० कंठं पू० ९

स्कंदाग्रजाय० स्कंधौ पू० १० पाशहस्ताय० हस्तौ पू० ११ गजवक्त्राय० वक्त्रं पू० १२ विघ्नहर्त्रे० ललाटं पू० १३ सर्वेश्वराय० शिरः पू० १४ गणाधिपाय० सर्वांगं पूजयामि १५ ॥ अथ पत्रपूजा । सुमुखाय० मालतीपत्रं स० १ गणाधिपाय० भृंगराजपत्रं० २ उमापुत्राय० बिल्वपत्रं० ३ गजाननाय० श्वेतदूर्वां० ४ लंबोदराय० बदरीपत्रं० ५ हरसूनवे० धत्तूरपत्रं० ६ गजकर्णाय० तुलसीपत्रं० ७ वक्रतुंडाय० शमीपत्रं० ८ गुहाग्रजाय० अपामार्गपत्रं० एकदंताय० बृहतीपत्रं० १० विकटाय करवीरपत्रं० ११ कपिलाय० अर्कपत्रं० १२ गजदंताय० अर्जुनपत्रं० १३ विघ्नराजाय० विष्णुकांतपत्रं० १४ बटवे० दाडिमीपत्रं० १५ सुराग्रजाय० देवदारुपत्रं० १६ भालचंद्राय० मरुपत्रं० १७ हेरंबाय० अश्वत्थपत्रं १८ चतुर्भुजाय० जातीपत्रं० १९ विनायकाय० केतकीपत्रं० २० सर्वेश्वराय० अगस्तिपत्रं० २१ ततो दूर्वायुग्मं गृहीत्वा गंधपुष्पाक्षतैर्युतं कृत्वा पूर्वोक्तनामभिः पूजयेत् । नैवेद्ये तु एकविंशतिमोदकान्घृतपाचितान्समर्पयेत् । ततो देवं प्रार्थयेत् । यन्मयाचरितं देव व्रतमेतत्सुदुर्लभम् । त्वत्प्रसादाद्गणेश त्वं सफलं कुरु सर्वदा ॥ १ ॥ इति प्रार्थ्य जागरणादिना रात्रिं निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य प्रधानदेवगणेशाय दूर्वापायसलड्डुकादिभिरष्टोत्तरसंख्य

या होमं कृत्वा एकविंशतिमोदकान् गृहीत्वा दश विप्राय दश आत्मने एकं देवाय अर्पयेत् । तत्रादौ दश मोदकान् गृहीत्वा वंशपात्रे फलयुतान् कृत्वा तदेव वायनं विप्राय दद्यात् । तत्र मंत्रः । वाणकं फलसंयुक्तं मोदकैर्दशभिर्युतम् । गणेशप्रीणनार्थाय तुभ्यं विप्र ददाम्यहम् ॥ १ ॥ ततः ब्राह्मणाय दक्षिणां विनायकप्रतिमां च दद्यात् । तत्र मंत्रः । विनायक गणेशान सर्वदेवनमस्कृत । पार्वतीप्रिय विघ्नेश मम विघ्नं विनाशय ॥ १ ॥ ततः पूर्वोक्तएकविंशतिगणेशनामभिः एकविंशति ब्राह्मणान् दक्षिणाभिः संपूज्य लड्डुकादिभिर्भोजयेत् । आचार्याय सवत्सां धेनुं धान्यं वासांसि च स्वशक्तितो दत्त्वा देवं विसृज्य बंधुभिः सह भुंजीत । इति सिद्धिविनायकव्रतोद्यापनम् ॥ श्रावणशुक्लचतुर्थ्यां कपर्दिविनाकयव्रतम् १ कार्तिककृष्णचतुर्थ्यां करकचतुर्थीव्रतम् २ माघशुक्ल चतुर्थ्यां गौरीचतुर्थीव्रतम् ३ तस्यामेव वरदचतुर्थीव्रतम् ४ अंगारचतुर्थ्याम् अंगारकचतुर्थीव्रतं ५ च कुर्यात् । एषां पंचव्रतानामुद्यापनं विधानाभावान्न लिखितम् । तत्तत्कथा स्तु दाक्षिणात्यऋग्वेदी यव्रतराजप्रभृतिनिबंधेषु ज्ञेयाः ॥ अथाश्विनकृष्णत्चतुर्थ्यां दशरथललिताव्रतोद्यापनम् ॥ भविष्योत्तरे ॥ अथ प्रयोगः ॥ आश्विनकृष्णचतुर्थ्यां देशकालौ स्मृत्वा मम पुत्रपौत्रसौभाग्यादिप्राप्तिद्वारा रोहि

णीसहितचंद्ररूपश्रीपरमेश्वरप्रीत्यर्थं दशवर्षावधि आचरितस्य दशरथललिताव्रतस्योद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं कर्म कृत्वा । रात्रौ पुष्पवाटिकामध्ये सर्वतोभद्रमंडले पूर्ववत्कलशं संस्थाप्य तदुपरि वंशपात्रे चतुरंगुलां सौवर्णीं रोहिणीप्रतिमाम् अष्टांगुलां चंद्रप्रतिमां च प्रतिष्ठाप्य । पुरुषसूक्तेन ॐ रोहिणीसहितचंद्रमसे नमः इति नाममंत्रेण च षोडशोपचारैः पूजयेत् । पुष्पांते अंगपूजा कार्या । ॐ उपांगललितायै नमः पादौ पूजयामि १ उमायै० जानुनी० २ सत्यै नाभिं० ३ कुमारिकायै० स्तनौ०४ लक्ष्म्यै० भुजौ० ५ सुभगप्रियायै० मुखं० ६ दशरथललितायै० मूर्धानं०७ ततः । दशरथाय त्वया दत्ता रामाद्याश्च सुताश्च ते । सौभाग्यं ललिते देवि तेहि तद्वन्ममापि हि ॥ १ ॥ इति प्रार्थ्य चंद्रमसे अर्घ्यं दद्यात् । ततःप्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ग्रहहोमं कृत्वा चन्द्रमसे ॐ इमंदेवा इतिमंत्रेण रोहिण्यै ॐ गौरीर्मिमायेति मंत्रेण च अष्टोत्तरशतदूर्वाभिस्तिलपायसलड्डुकैश्च होमं कृत्वा सर्वतोभद्रमंडलदेवताभ्यःएकैकाज्याहुतिं हुत्वा होमशेषं समापयेत् । ततः आचार्यं वस्त्रादिभिःसंपूज्य सदक्षिणं वायनं दद्यात् । तत्र मंत्रः । दशरथललितादेव्या व्रतसंपूर्त्तिहेतवे । वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥ १ ॥ ततःसपत्नीकान् दश ब्राह्मणान् वस्त्रालंकारादिभिः

संपूज्य सुगंधोदकपूरितान् दश करकान् दद्यात् । ततो दक्षिणां सोपस्करं पीठं गां च आचार्याय दत्त्वा विसर्जयेत् । तत्र मंत्रः । सवाहना शक्तियुता वरदा पूजिता मया । मातर्मामनुगृह्याद्य गम्यतां निजमंदिरम् ॥ १ ॥ इति विसृज्य । दश ब्राह्मणान् मोदकपायसादिभिर्भोजयित्वा आशिषो गृहीत्वा स्वयं भुंजीत । इति दशरथललितात्रतोद्यानम् ॥ इति श्रीपण्डितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे चतुर्थीव्रतोद्यापनानि समाप्तानि ॥ ॥ अथ पंचमीव्रतोद्यापनानि तत्र तावत् नागपंचमीव्रतोद्यापनम् भविष्योत्तरे प्रभासखण्डे च । तच्च श्रावणशुक्लपंचम्यां भाद्रशुक्लपंचम्यां च कार्यम् ॥ चतुर्थ्यामेकभक्तं कृत्वा पंचम्यां प्रातर्नद्यादौ स्नात्वा नित्यकर्म्म समाप्य । देशकालौ स्मृत्वा । मम संतत्यभिवृद्धिपूर्वकं सौभाग्यवृद्धिद्वारा श्रीनागरूपपरमेश्वरप्रीत्यर्थं नागपंचमीव्रतंकरिष्ये । इति संकल्प्य । गणेशपूजनादि आचार्यवरणांतं कुर्य्यात् । ततः सौवर्णं राजतं दारुमयं मृन्मयं वा नागं कृत्वा पटे चंदनादिना पंचफणं वा नागं विलिख्य । दधिदुग्धदूर्वाक्षतकरवीरशतपत्रजातीपुष्पपद्मगंधादिभिः संपूज्य अनंताय नमः १ वासुकये नमः २ शेषाय० ३ पद्मनाभाय० ४ कंबलाय० ५ कालियाय० ६ कर्कोटकाय० ७ तक्षकाय० ८ अश्वतराय० ९ धृतराष्ट्राय० १० शं

क्षपालाय९ ११ पिंगलाय नमः १२ एतैर्नाममंत्रैर्विशेषपूजां कुर्य्यात् । ततो ब्राह्मणान् घृतपायसैः संतर्प्य स्वयं तैलपक्वविवर्जितान्नेन नक्तं कुर्यात् । ( एवं प्रतिमासं पंचम्यां कृत्वा प्रतिमासमनंतादि नाम्ना संपूजयेत् ) एवं द्वादशवर्षमेकवर्षं वा संपाद्य अंते सर्वतोभद्रमण्डलस्थकलशे रत्नचित्रितं कांचनं नागं पूर्ववत्संपूज्य घृतपायसं निवेद्य रात्रौ जागरणं कृत्वा षष्ठ्यां प्रातः पुनः पूर्ववत्संपूजयेत् । ततः कथावाचकाय व्यासरूपिणे ब्राह्मणाय सोपस्करां प्रतिमां पीठं गां च दद्यात् । तत्र मंत्रः । दानकाले पठेदेतत्स्मरन्नारायणं प्रभुम् । सर्वगं सर्वधातारमनंतमपराजितम् ॥ १ ॥ ये केचिन्मे कुले सर्पैर्दष्टाः प्राप्ता ह्यधोगतिम् । व्रतदानेन गोविंद मुक्तिभाजो भवंतु ते ॥ २ ॥ इत्युक्त्वा सितचंदनाक्षतयुतमोदकं जले निक्षिपेत् । ततः ब्राह्मणानां यतीनां न नागानुद्दिश्य महाभोज्यं दत्त्वा आशिषो गृहीत्वा स्वयं भुंजीत अनेन सर्पयोनेर्मुक्तो भवति ॥ इति नागपंचमीव्रतोद्यापनम् ॥

॥ अथ भाद्रशुक्लपंचम्यामृषिपंचमीव्रतोद्यापनम् ॥ भविष्योत्तरे ॥ सप्तवर्षपर्यन्तं व्रतं कृत्वा अन्ते भाद्रशुक्लचतुर्थ्यामेकभक्तं विधाय पंचम्यां प्रातर्नद्यादौ अपामार्गदंतधावनपूर्वकं स्नात्वा नित्यकर्म समाप्य पंचगव्यं प्राशयेत् । ततो मध्याह्ने पुनः स्नात्वा धौतवस्त्रे परिधाय सपत्नीको यजमानः

देशकालौ संकीर्त्य । मया ज्ञानतोऽज्ञानतो वा रजस्वलावस्थायां कृतसंपर्कजनितदुर्योनित्वदोषपरिहारद्वाराशुभफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थमाचरितऋषिपंचमीव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजादि आचार्यवरणांतं कर्म्म कुर्यात् । ततो वृताचार्यः सर्वतोभद्रमण्डलमध्ये सप्तसप्तकलशान् एकं वा यथाविधिना संस्थाप्य तेषु शक्त्या संपादिता हैमीः सप्तर्षिप्रतिमाः अरुंधतीसहिता अष्टौसंख्याकाः प्रतिष्ठापयेत् । तत्र मंत्रः । ॐ सप्तऽऋषयःप्प्रतिहिताः शरीरे सप्त रक्षंति सदमप्प्रमादम् । सप्तापः स्वपतोलोकमीयुस्तत्र जागतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ १ ॥ ॐ कश्यपाय नमः कश्यपमावाहयामि १ अत्रये नमः अत्रिमावाहयामि २ भरद्वाजाय नमः भरद्वाज० ३ विश्वामित्राय० विश्वामित्रं ४ गौतमाय० गौतमं० ५ जमदग्नये० जमदग्निं० ६ वसिष्ठाय० वसिष्ठं० ७ अरुंधत्यै० अरुंधतीमावाहयामि ८ इत्यावाह्य । ॐ मनोजूतिरिति प्रतिष्ठाप्य । पुरुषसूक्तेन स्त्री चेन्नाममंत्रेण षोडशोपचारैः संपूज्य । नमोस्तु ऋषिवृंदेभ्यो देवर्षिभ्यो नमोनमः । सर्वपापहरेभ्यो हि वेदविद्भ्यो नमोनमः ॥ १ ॥ एते सप्तर्षयः सर्वे भक्त्या संपूजिता मया । सर्वपापं व्यपोहंतु ज्ञानतोऽज्ञानतः कृतम् ॥ २ ॥ इति प्रार्थ्य वायनं दद्यात् । तत्र मंत्रः । वायनं फलसंयुक्तं सघृतं

दक्षिणान्वितम् । द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे ॥ १ ॥ भवंतः । प्रतिगृह्णन्तु ज्योतीरूपा स्तपोधनाः । उभयोस्तारकाः संतु वायनस्य प्रसादतः ॥ २ ॥ ततः प्रार्थना । न्यूनातिरिक्तकर्माणि मया यानि कृतानि च । क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः ॥ १ ॥ इति क्षमाप्य । कथाश्रवणादिना रात्रिं निनयेत् ॥ ततः प्रातरग्निं प्रतिष्ठाप्य । आज्यभागांते ग्रहहोमं कृत्वा अरुंधतीसहितकश्यपादिसप्तर्षिभ्यस्तत्तन्नाममंत्रेण प्रत्येकं तिलव्रीहियवसर्पिर्द्रव्यैरष्टोत्तरसहस्रमष्टो त्तरशतमष्टाविंशतिंवा हुत्वा सर्वतोभद्रदेवताभ्यश्च एकैकयाज्याहुत्या हुत्वा होमशेषं समाप येत् । ततः पूजां कृत्वा सपत्नीकान् सप्त ब्राह्मणान् वस्त्रादिना संपूज्य तेभ्यः क्रमेण दक्षिणा प्रतिमायुतकलशान् दद्यात् । तत्र मंत्रः । प्रतिगृह्ण द्विजश्रेष्ठ प्रतिमादिसमन्वितम् । कलशं चर्षिसं प्रीत्यै व्रतसंपूर्तिहेतवे ॥ १ ॥ यदैककुम्भस्तदा सर्वप्रतिमापूजनादिद्रव्यसहितं कलशमाचार्याय दद्यात् । अन्येभ्यः दक्षिणावस्त्रयज्ञोपवीतयुतान् पक्वान्न पूरितान् कलशान् दद्यात् । ततः आचा र्याय सुवर्णांगुलीयक कुण्डलाभूषणानि सवत्सां सोपस्करां पयस्विनीं च दत्त्वा प्रार्थयेत् । सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभप्रदाः । सर्वपापं च मे घ्नंतु ज्ञानतोऽज्ञानतः कृतम् ॥ १ ॥ ततो ब्राह्मणान्

भोजयित्वा दीनानाथान् संतर्प्य इष्टबंधुजनैः सह भुंजीत ॥ इति ऋषिपंचमीव्रतोद्यापनप्रयोगः ॥ अथ आश्विनशुक्लपंचम्यां मध्याह्नव्यापिन्यामुपांगललिताव्रतम् । तस्योद्यापनप्रयोगः ( उद्यापनकौमुद्याम् ) । प्रातःदंतधावनपूर्वकं नद्यादौ स्नात्वा शुक्लवाससी परिधाय मंडपिकादिकं कृत्वा तिथ्यादि संकीर्त्य मया पुत्रपौत्रविद्यारोग्यसुखविजयपुष्ट्यादिकामेन स्त्रीत्वावैधव्यकामनयोपांगललिताप्रीत्यर्थमष्टवर्षात्मकाचरितोपांगललिताव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनादि आचार्यवरणांतं कर्म कुर्यात् । ततःआचार्यः एकलिंगतोभद्रे ताम्रकलशोपरि सौवर्णीं ललिताप्रतिमां प्रतिष्ठाप्य पौराणमंत्रैः श्रीसूक्तेन च पूजयेत् । तत्रादौ ध्यानम् । नीलकौशेयवसना हेमाभां कमलासनाम् । भक्तानां वरदां नित्यं ललितां चिंतयाम्यहम् ॥ १ ॥ पुष्पपूजांते उपांगललितायै०पादौ पू० भवान्यै० गुल्फौ०सिद्धेश्वर्यै० जंघे० श्रियै० ऊरू० विश्वरूपिण्यै० कटी० देव्यै० नाभिं० वरदायै० कुक्षिं० शिवायै० हृदयं० वागीश्वर्यै० स्कंधौ० महादेव्यै० बाहू० प्रकृतिभद्रायै० करौ० पद्मिन्यै० कंठं० सरस्वत्यै० मुखं० पद्मकेसरवासिन्यै० नासिकां० महिषमर्दिन्यै० नेत्रे० लक्ष्म्यै० कर्णौ० भवान्यै० ललाटं० विंध्यवासिन्यै० शिरः पू० सिंहवाहिन्यै० सर्वां

गं पू० । ततो धूपादिकं समर्प्य पुष्पांजल्यंते साग्रानष्टचत्वारिंशत्परिमितान् दूर्वांकुरान् हस्तेना
दाय । बहुप्ररोहासततमभूता हरिता लता । यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः १ इति मंत्रेणा
र्पयेत् । ततः प्रदक्षिणात्रयं कृत्वा साष्टांगं प्रणम्य क्षमाप्य कथाश्रवणादिना रात्रौ जागरणं
कुर्यात् ॥ ततःप्रातर्नित्यकर्म कृत्वा पुनः देवीं संपूज्यं अष्टौ वटकान् समर्प्य । स्थंडिलेऽग्निं प्रति
ष्ठाप्य आज्यभागांते उपांगललितादेव्यै ॐ गौरीर्मिमायेतिमंत्रेण अष्टोत्तरशतं दूर्वाभिर्होमं कृत्वा ।
नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताःप्रणताः स्म ताम् ॥ १ ॥
इतिमंत्रेणाष्टोत्तरशतं तिलसर्पिःपंचखाद्ययुतपायसाहुतिभिश्च होमं कुर्यात् । ततः लिंगतोभद्रदेवताभ्य
एकैकामाज्याहुतिं हुत्वा बलिदानं च कृत्वा होमशेषं समापयेत् ॥ ततः अष्टौ ब्राह्मणान् वस्त्रादिभिः
संपूज्य तेभ्यःपक्वान्नपूरितान् दक्षिणासहितानष्टौ कलशान् दद्यात् । ततः आचार्यं वस्त्रालंकारा
दिभिःसंपूज्य सदक्षिणं विंशतिवटकसहितं वायनं दद्यात् । तत्र मंत्रः । पक्वान्नफलसंयुक्तं सघृतं
दक्षिणान्वितम् । उपांगललिताप्रीत्यै ब्राह्मणाय ददाम्यहम् ॥ ततो देवीं विसर्जयेत् । सवाहना
शक्तियुता वरदा पूजिता मया । मातर्मामनुगृह्याथ गम्यतां निजमंदिरम् ॥ १ ॥ एवं विसृज्य सोप

स्करं पीठं च आचार्याय दत्त्वा ब्राह्मणान् सदन्नेन भोजयित्वा आशिषो गृहीत्वा स्वयं विंशति वटकान् भुञ्जीत ॥ इति दाक्षिणात्यदेशाचारप्रयुक्तोपांगललिताव्रतोद्यापनप्रयोगः ॥ इति व्रतोद्यापन प्रकाशे पंचमीव्रतोद्यापनानि समाप्तानि ॥ अथ षष्ठीव्रतोद्यापनानि ॥ तत्रादौ भाद्रशुक्लषष्ठ्यां ललिता व्रतोद्यापनम् । हेमाद्रौ भविष्ये । प्रातर्नारी नद्यां स्नात्वा शुक्लांबरा सुवेषाभरणोपेता वंशपात्रे नद्याः पंचपिंडाकृतिवालुकां संगृह्य गृहमागत्य पीठादौ संस्थाप्य । देशकालौ स्मृत्वा मम अखंडितसौभा ग्यप्राप्तिपूर्वकसौख्याभिवृद्धिद्वारा श्रीललिताप्रीत्यर्थं ललिताषष्ठीव्रतोद्यापनं करिष्ये । इति संकल्प्य ध्यानादिभिः पूजयेत् । ततः । पंकजं करवीरं च नेवालीं मालतीं तथा । नीलोत्पलं केतकं च संगृह्य तगरं तथा ॥ १ ॥ एकैकाष्टशतं ग्राह्यमष्टाविंशतिरेव वा । अक्षताः कलिका ग्राह्यास्ता भिर्देवीं समर्चयेत् ॥ २ ॥ एवमभ्यर्च्य विधिना नैवेद्यं पुरतो न्यसेत् । सार्द्ध सगुडकैर्धूपैः सोहालककर जकैः ॥ ३ ॥ घृतपक्वैः कर्णवेष्टैर्मोदकैः । बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः ॥ ४ ॥ त्रपुसैरपिकूष्मां डैर्नालिकेरैः सुदाडिमैः । बीजपूरैः सतुंडीरैः कारवेल्लैः सचिर्भटैः ॥ ५ ॥ फलैस्तत्कालसंभूतैः कृत्वा शोभां तदग्रतः । विरूढैर्धान्यसम्भूतैर्दीपिकाभिः समंततः ॥ ६ ॥ एवं पूजां कृत्वा प्रार्थयेत् ॥ ललिते

ललिते देवि सौख्यसौभाग्यदायिनि । अनंतं देहि सौभाग्यं भगवत्यवरं परम् ॥ १ ॥ ततो रात्रौ गीतवाद्यादिभिर्मेषोन्मेषरहितं सखीभिःसह जागरणं कृत्वा सप्तम्यां प्रातःतत्सर्वं नदीं प्रति नीत्वा गंधपुष्पाक्षतादिभिर्देवीमभ्यर्च्य तत्सर्वं नैवेद्यादिकं विप्राय दत्त्वा गृहमागत्य अग्निं प्रतिष्ठाप्य आज्यभागांते अष्टोत्तरशतदूर्वातिलघृतपंचखाद्ययुतपायसं च हुत्वा होमं समापयेत् । ततो देव पितृमनुष्यान् सुवासिनीः कन्याकाश्चालंकारादिभिः पंचदश ब्राह्मणांश्च दक्षिणावस्त्रादिभिः संपूज्य आचार्याय गां च दत्त्वा बहुविधैर्भक्ष्यभोज्यैः संभोज्य 'ललिता मेऽस्तु सुप्रीता' इयुक्त्वा विसृज्य स्वयं भुंजीत इति ललिताषष्ठीव्रतोद्यापनम् ॥ अथकपिलाषष्ठीव्रतम् । हेमाद्रौ भविष्ये । भाद्र कृष्णषष्ठ्यां कपिलाषष्ठीव्रतम् । तच्च पूर्वापरयुतायां योगविशेषेण कार्यम् ( योगलक्षणं पुराणसमुच्चये ) भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते । पाते कुजे च रोहिण्यां सा षष्ठी कपिला स्मृता ॥ १ ॥ संयोगे च चतुर्णां च निर्दिष्टा परमेष्ठिना । वाराह पुराणेऽपि । नभस्ये कृष्णपक्षे तु रोहिणीपातभूसुतैः । युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥ १ ॥ तत्र प्रयोगः । पंचम्यामेकभक्तं कृत्वा षष्ठ्यां प्रातर्नद्यादिकं गत्वा जलपूर्णांजलिं

कृत्वा । निराहारोद्य देवेश त्वद्भक्तस्त्वत्परायणः । पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर ॥ १ ॥ इत्यर्घ्यं दत्त्वा देवदारूशीरकुंकुमैलामनः शिलापद्मकपत्रकयष्टिमधुगव्यानां पेषणं कृत्वा क्षीरेणा लोड्य तत्कल्केन स्नानं कुर्यात् । तत्र मंत्रः । आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । पापं नाशय मे देव मनोवाक्कायकर्मजम् ॥ १ ॥ ततः पंचगव्येन स्नात्वा पंचपल्लवैर्मार्जनं कृत्वा शुद्धमृत्तिकां गृहीत्वा स्नायादनेन मन्त्रेण ॥ मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमंत्रिता । पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धरेति ॥ १ ॥ ततः वरुणं पूजयेत् । पूजामन्त्रः । पाशाग्रहस्त वरुण सर्ववारीश्वर प्रभो ॥ अद्याहं प्रार्थयामि त्वां पूतं कुरु सुरेश्वर ॥ १ ॥ ततः स्नात्वा तिलकं धृत्वा भास्करं प्रणमेत् । आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः । प्रभाकरो वितिमिरो देवः सर्वेश्वरो हरिः ॥ १ ॥ ततो गृहमागत्य तिथ्यादि संकीर्त्य मम अशेषपापक्षयपूर्वकरूपसंपदा रोग्यविपुलसंततिस्वर्गलोकप्राप्तिद्वारा सर्वविभासकसर्वतेजोमयश्रीसूर्यनारायणप्रीत्यर्थं कपिलाष ष्ठीव्रतोद्यापनं करिष्ये । तदंगत्वेन पुण्याहवाचनादि कृत्वा ततो वृताचार्यः स्वयं वा गोमये नोपलिप्तायां भूमौ कुंकुमेनाष्टदलपद्मं विधाय तदुपरि सर्वतोभद्रे कलशोपरि रक्तवस्त्रेऽष्टपत्रं

सकर्णिकं पद्मं कृत्वा तत्र पूर्वादिक्रमेण देवता आवाहयेत् । पूर्वपत्रे ॐ सूर्याय नमः १ आग्नेयपत्रे ॐ तपनाय नमः २ याम्ये सुवर्णरेतसे नमः ३ नैर्ऋत्ये रवये नमः ४ पश्चिमे आदित्याय नमः ५ वायव्ये दिवाकराय० ६ उत्तरे प्रभाकराय० ७ ईशानपत्रे ॐ सूराय नमः ८ मध्ये ॐ तीव्ररश्मिधराय ब्रह्मणे नमः ९ । तत्रैव । ॐ अरुणाय नमः इत्यावाह्य । तदुपरि सप्ताश्वभूषितं सौवर्णं रथं तस्याग्रतः सौवर्णमरुणं सारथिं च धृत्वा रक्तचंदनपुष्पैः संपूज्य । ॐ विनतातनयो देवः कर्मसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥ १ ॥ इति मन्त्रेणाऽरुणं संपूज्य रथोपरि सौवर्णीं पलप्रमाणां तदर्द्धां कर्षमितां वा सूर्यप्रतिमां संस्थाप्य । ॐ आकृष्णेन रजसा० १ इति मन्त्रेण आवाह्य । प्रभूताय नमः १ विमलाय० २ साराय० ३ आराध्याय० परमाय० ५ इत्यासनपंचकं कल्पयेत् । ततः परितः पूर्वादिक्रमेण दीप्तादिशक्तीर्न्यसेत् ॥ ॐ दीप्तायै नमः १ सूक्ष्मायै० २ जयायै० ३ भद्रायै० ४ विभूत्यै० ५ विमलायै० ६ अमोघायै० ७ विद्युतायै नमः ८ मध्ये ॐ सर्वतोमुख्यै नमः ९ ततो न्यासं कुर्यात् । ॐ भास्कराय नमः शिखायाम् १ सूर्याय० ललाटे २ भानवे० चक्षुषोः ३ रवये नमः मुखे ४ भानवे० कंठे ५ पद्महस्ताय० हस्तयोः ६ तिमि

रक्षयकर्त्रे० स्तनयोः ७ जातवेदसे० नाभ्याम् ८ भानवे० कट्याम् ९ उग्ररूपाय० गुह्ये १० तेजोरूपाय० जंघयोः ११ सर्वरूपाय० पादयोः १२ एवं न्यस्य । रक्तचंदनकरवीरार्कपुष्पैः कुंकुमादिभिश्च संपूज्य अंगपूजां कुर्यात् । तद्यथा । ॐ मार्तंडाय नमः पादौ पूजयामि । भानवे नमः जंघे पूजयामि । आदित्याय० जानुद्वयं० । भास्कराय० ऊरू० । तपनाय० कटी० । रवये० नाभिं० । हंसाय० वक्षःस्थलं । दिवाकराय नमः शीर्षं पूजयामि । इत्यंगपूजां कृत्वा अर्घ्यं दद्यात् । करवीरार्कपुष्परक्तचंदनचंपकपुष्पकुंकुमदूर्वादियुक्तं जलपूरितं ताम्रपात्रं गृहीत्वा जानुभ्यामवनीं गत्वार्घ्यं निवेदयेत् । तत्र मन्त्रः । वेदगर्भ नमस्तुभ्यं देवगर्भ नमोस्तु ते । अव्यक्तमूर्तये तुभ्यमर्घ्यं गृह्ण नमोस्तु ते ॥ १ ॥ ब्रह्ममूर्तिधरायेश चतुर्वक्त्र सनातन । सृष्टिस्थितिविनाशाय गृहाणार्घ्यं नमोस्तु ते ॥ २ ॥ विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भुजः । प्रभवः सर्वलोकानामर्घ्यं गृह्ण नमोस्तु ते ॥ ३ ॥ तं रुद्ररूपिणं वंदे भगवंतं त्रिशूलिनम् । यो दहेच्च त्रिलोकं वै अर्घ्यं गृह्ण नमोस्तु ते॥४॥ उदयस्थ महाभूत तेजोराशिसमुद्भव । तिमिरक्षयकृद्देव ह्यर्घ्यं गृह्ण नमोस्तु ते ॥ ५ ॥ मन्त्रपूत गुडाकेश नृगते व्याधिनाशन । सप्तभिश्चैव जिह्वाभिरर्घ्यं गृह्ण नमोस्तु ते ॥ ६ ॥ त्वं ब्रह्मा च त्वं च

विष्णू रुद्रस्त्वं च प्रजापतिः । त्वमेव सर्वभूतात्मा अर्घ्यं गृह्ण नमोस्तु ते ॥ ७ ॥ कालात्मा सर्व
भूतात्मा वेदात्मा सर्वतोमुखः । जन्ममृत्युजराशोकसंसारभयनाशनः ॥ ८ ॥ दारिद्र्यव्यसन
ध्वंसी श्रीमान्देवो दिवाकरः । सुवर्णः स्फाटिको भानुः स्वर्णरेता दिवाकरः ॥ ९ ॥ हरिदश्वोंऽशुमाली
च अर्घ्यं गृह्ण नमोस्तु ते । चतुर्भिर्मूर्तिभिः संस्था त्वष्टाभिः परिगीयते ॥ १० ॥ सामध्वनि
स्तुतो यज्ञे अर्घ्यं गृह्ण नमोस्तु ते ॥ इत्यर्घ्यं दत्त्वा गंधपुष्पधूपदीपनैवेद्यतांबूलदक्षिणाभि
र्यथाशक्त्या संपूज्य प्रार्थयेत् । अथ प्रार्थना । अग्निमीळे नमस्तुभ्यं नमस्ते जातवेदसे । इषेत्वैव
नमस्तुभ्यमग्ने चैव नमोनमः ॥ १ ॥ शन्नोदेवी नमस्तुभ्यं जगज्जन्म नमोनमः । आत्मरूपिन्नम
स्तुभ्यं विश्वमूर्त्ते नमोनमः ॥ २ ॥ त्वं धाता त्वं च वै विष्णुस्त्वं ब्रह्मा त्वं हुताशनः । मुक्तिकामम
भीप्सामि प्रार्थयामि सुरेश्वर ॥ ३ ॥ विश्वतश्चक्षुराख्यातो विश्वतश्चरणाननः । विश्वात्मा
सर्वतो देवः प्रार्थयामि सुरेश्वर ॥ ४ ॥ इति भास्करं प्रार्थ्य । ॐ संवर्चसा० इति मन्त्रेण
तोयेन मुखं विमृज्य । ॐ हꣳसःशुचिषदित्यृचा सूर्यमवलोक्य । ॐ संवर्चसाप यसासं-
तनूभिरगन्महिमनसास ꣳ शिवेन । त्वष्टासुदत्रोविदधातुरायोनुमाष्टुतन्वोयद्विलिष्टम् ॥ हꣳसः

शुचिषद्वसुरन्तारिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋत जाऽअद्रि
जाऽऋतंबृहत् ॥ १ ॥ ततःउदुत्यं० १ चित्रंदेवाना० २ । इति मंत्रद्वयं देवाग्रतो जपेत् ॥
ततो दूर्वाफलपुष्पाक्षतनानाविधभक्ष्यैः फलकं कृत्वा तत्र शुभदेशे शय्यां प्रकल्प्य तत्र लवणाच
लोपरि रौप्यमयं खड्गहस्तं वस्त्रयुगच्छन्नं पुरुषं संस्थाप्य पूजयेत् । तत्र मंत्रः । नमस्ते क्रोधरूपाय
खड्गहस्तजिघांसवे । जिघांसकं च त्वां दृष्ट्वा दुद्रुवुः सर्वदेवताः ॥ १ ॥ त्वया व्याप्तं मेरुपृष्ठं चंडभा
स्करसुप्रभम् । अतस्त्वां पूजयिष्यामि अर्घ्यं गृह्ण नमोस्तु ते ॥ २ ॥ अनेन मंत्रेण स्नानमर्घ्यार्चना
दिकं च कुर्यात् । ततस्तां रात्रिं गीतवादित्रनिस्वनैः क्षपयित्वा । अभ्युदिते सूर्ये देवं सांगं संपूज्य
अग्निं प्रतिष्ठाप्य । आघारावाज्यभागौ च हुत्वा । प्रधानदेवसूर्याय अर्कसमिद्भिः घृताक्तयव
तिलैश्चरुणा घृतेन च प्रतिद्रव्यमष्टोत्तरसंख्याकाहुतिभिः । ॐ आकृष्णेन रजसा० इति मंत्रेण
व्याहृतिभिर्वा होमं कुर्यात् । ततःसर्वतोभद्रमंडलस्थब्रह्मादिदेवताभ्यो घृताहुत्या हुत्वा स्विष्टकृदादि
होमशेषं समाप्य कपिलाधेनुदानं कुर्यात् । तद्यथा । कपिलां सवत्सां वस्त्रघंटास्वर्ण शृंगताम्रपृष्ठरौप्यखु
रकांस्यदोहनादियुतां संपाद्य पूर्वोक्तधेनुदानविधिना आचार्यपूजनं धेनुपूजनं देवर्षिपितृतर्पणं च कृत्वा

प्रार्थयेत् । कपिले सर्वभूतानां पूजनीयासि रोहिणी । सर्वतीर्थमयी यस्मादतः शांतिं प्रयच्छ मे ॥ १ ॥ कपिले पुण्यकर्मासि निष्पाद्ये पुण्यकर्मणि । मां समुद्धर दीनं च ददतो ह्यक्षयं कुरु ॥२॥ ब्रह्मणोत्पादिता देवि अग्निकुंडात्सुसुप्रभा । नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते ॥ ३ ॥ जय नित्यं महासत्त्वे सर्वतीर्थादिमंगले । दातारं स्वजनोपेतं ब्रह्मलोकं नयाशु वै ॥ ४ ॥ इति प्रार्थ्य पुनः आचार्य संपूज्य तद्धस्ते गोभूहिरण्यवासोव्रीहिलवणतिलान् दत्त्वा प्रदक्षिणां विधाय सोपस्करं सदक्षिणं स्वर्णमयं भानुं च दद्यात् । तत्र मंत्रः । दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मा दिवाकरः । कपिलासहितो देवो मम मुक्तिं प्रयच्छतु ॥ १ ॥ भास्करः प्रतिगृह्णाति भास्करो वै ददातिच । भास्करस्तारकोभाभ्यां तेन वै भास्करो मम ॥ २ ॥ तस्मात्त्वं कपिले पुण्या सर्वलोकस्य पाविनी । प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव ॥ ३ ॥ ततो ब्राह्मणान् पायसेन गुडेन च भोजयित्वा तेभ्यो दक्षिणां दत्त्वा आशिषो गृहीत्वा सुहृद्युक्तो भुंजीत । आरोग्यरूपसौभाग्यसर्वदुःखविवर्जितः । अंते गोलोकमासाद्य चिरायुःसुखभाग्भवेत् ॥ १ ॥ इति कपिलाषष्ठीव्रतोद्यापनप्रयोगः ॥ अथ कार्तिके स्कंदषष्ठीव्रतं ( भविष्ये ) षष्ठ्यां फलाशनो राजन्विशेषात्यकार्तिके नृप । राज्यच्युतो विशेषेण स्वं राज्यं लभतेऽचिरात् ॥ १ ॥

षष्ठीतिथिर्महाराज सर्वदा सर्वकामदा । उपोष्या सा प्रयत्नेन सर्वकालं जयार्थिना ॥ २ ॥ कार्तिके यस्य दयिता एषा षष्ठी महातिथिः । देवसेनाधिपत्यं हि प्राप्तमस्यां महात्मनः ॥ ३ ॥ अस्यां हि श्रीसमायुक्तो यस्मात्स्कंदोऽभवत्पुरा । तस्मात्षष्ठ्यां न भुंजीत प्राप्नुयाद्भार्गवीं सदा ॥ ४ ॥ तत्र प्रयोगः । यस्यांकस्यांचित् षष्ठ्यां प्रातः स्नात्वा नित्यकर्म कृत्वा देशकालौ संकीर्त्य ॥ मम सत्कुलादिजन्म प्राप्तिपूर्वकमैहिकविद्यालक्ष्मीसुखाद्यभिवृद्धिद्वारा श्रीस्कंदप्रीत्यर्थं स्कंदषष्ठीव्रतं करिष्ये । इति संकल्प्य । गणेशादिपूजां कुर्यात् । ततः सुवर्णादिना स्कंदमूर्तिं कृत्वा पीठे संस्थाप्य षोडशोपचारैः संपूज्य । ताम्रपात्रे दधिघृतपुष्पाक्षतचंदनयुतजलेन अर्घ्यं दद्यात् । तत्र मंत्रः । सप्तर्षिदारज स्कंद सेनाधिप महाबल । रुद्रोमाग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते ॥ १ ॥ प्रीयतां देवसेनानीः संपादयतु हृद्गतम् ॥ एवमर्घ्यं दत्वा विप्राय आमान्नं दक्षिणां च दद्यात् । ततो रात्रौ भूमिभाजनं कृत्वा तैलपक्वविवर्जितं भोजनं कुर्यात् । एवं शुक्लायां कृष्णायां च षष्ठ्यां कार्यम् । सर्वाभीष्टसिद्धिः । इति स्कंदषष्ठी व्रतम् ॥ भाद्रपदे वा मार्गशीर्षशुक्ले चंपाषष्ठीव्रतम् ( स्कंदपुराणे ) । षष्ठी भाद्रपदे शुक्ला वैधृत्या च समन्विता । विशाखाभौमयोगेन सा चंपा इति विश्रुता ॥ १ ॥ देवासुरमनुष्याणां

दुर्लभा षष्टिहायनैः ( तत्रैव ) मार्गे भाद्रपदे शुल्के षष्ठी वैधृतिसंयुता । रविवारेण संयुक्ता सा चंपा इति कीर्तिता ॥ पंचम्यां नियमं कुर्यादाचार्यवचनाद्व्रती । षष्ठ्यां स्नानं प्रकुर्वीत संतर्प्य पितृदेवताः ॥ अभ्येत्य स्वगृहं मौनी सूर्यं मनसि चिंतयेत् । स्थापयेदव्रणं कुंभं मृत्पात्रं च तथोपरि ॥ तस्यो परि न्यसेत्सूर्यं पलैकेन विनिर्मितम् । सौवर्णं भक्तिसंयुक्तं रथं सारथिना युतम् ॥ तमर्चयेज्जगन्नाथं गृहीत्वाज्ञां गुरो स्वयम् । षडक्षरेण मंत्रेण गंधपुष्पाक्षतादिभिः ॥ ( ॐ नमः सूर्यायेति मंत्रः ) संपूज्य विधिवद्देवं फलपुष्पादिकं च यत् । सूर्यायावेदयेत्सर्वं सूर्यो मे प्रीयतामिति ॥ ततः प्रभाते विमले गत्वा गुरुगृह व्रती । सर्वोपकरणैः सूर्यमाचार्याय निवेदयेत् ॥ धान्यं पुष्पं फलं वस्त्रं रत्नधेन्वादिकं च यत् । गवां कोटिसहस्रं तु कुरुक्षेत्रेर्कपर्वणि ॥ चंपादानस्य राजेंद्र कलां नार्हति षोडशीम् । सर्व तीर्थप्रदानानि तथान्यान्यपि षोडश ॥ चंपया तुलितानीह चंपैका त्वतिरिच्यते ( इयं योगविशेषेण पूर्वा योगाभावे पराग्राह्या ( इति गौडपंडितश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे षष्ठीव्रतोद्यापनानि ॥ अथ सप्तमीव्रतोद्यापनानि ॥ तत्र तावद्वैशाखशुक्लसप्तम्यां गंगोत्पत्तिस्तत्पूजा च ( पृथिवीचन्द्रोदये ब्राह्मे ) वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरंध्रात्तु दक्षिणात् ॥ तां तत्र

पूजयेद्देवीं गंगां गगनमेखलाम् । (अन्यत्रोक्तम्) देयं कुंभसहस्रं तु गंगाया व्रतके शुभे । तारणं पारणं चैव तद्व्रतं सार्वकामिकम् ॥ वैशाखशुक्लपक्षे तु सप्तम्यां पूजयेद्धरिम् । गंगायां विधिवत्स्नात्वा भोजये द्ब्राह्मणान् दश ॥ पूजयेत्सूक्ष्मवस्त्रैश्च पुष्पस्रक्चंदनैः शुभैः । पूजकःसर्वपापेभ्यो मुच्यते नात्र संशयः ॥ (इयं च शिष्टाचारान्मध्याह्नव्यापिनी ग्राह्या) इति गंगासप्तमीव्रतम् ॥ अथ शुक्लादिश्रावणकृष्णसप्तम्यां मध्याह्नव्यापिन्यां शीतलाव्रतम् ॥ प्रातःस्नात्वा देशकालौ संकीर्त्य । मम इह जन्मनि जन्मांतरे च अवैधव्यप्राप्तये अखंडितसौभाग्यभर्तृसंयोगपुत्रपौत्रसौख्यधनधान्यप्राप्तये च शीतलाव्रतं करिष्ये । तदंगत्वेन यथामिलितोपचारैः शीतलापूजनं करिष्ये । इति संकल्प्य । अष्टदलयुते पीठे अव्रणं कलशं यथाविधिना संस्थाप्य तदुपरि सौवर्णीं शीतलप्रतिमां स्थापयेत् । अथ ध्यानम् । वंदेहं शीतलां देवीं रासभस्थां दिगंबराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ इति ध्यात्वा । ॐ शीतलायै नमः । इत्यावाहनादिषोडशोपचारैः संपूज्य । शीतले पंचपक्वान्नं दध्योदनयुतं शुभम् । नैवेद्यं गृह्यतां देवि घृतमिश्रं च सुंदरि ॥ १ ॥ इति शीतलपंचपक्वान्नं निवेद्य । शीतले दह मे पापं पुत्रपौत्रसुखप्रदे । धनधान्यप्रदे देवि पूजां गृह्ण नमोस्तु ते ॥ १ ॥ इति पूजां निवेद्य अर्घ्यं दद्यात् ।

प्र०
॥६६॥

तत्र मंत्रः । शीतले शीतलाकारे अवैधव्यसुतप्रदे ॥ श्रावणस्याऽसिते पक्षे अर्घ्यं गृह्ण नमोस्तु ते ॥ १ ॥ ततः सप्तसुवासिनीः पूजयित्वा कथां श्रुत्वा ताभिः सह भुंजीत । इति शीतलासप्तमी व्रतम् ॥ अथ भाद्रपदशुक्लसप्तम्यां मुक्ताभरणव्रतम् । ( हेमाद्रौ भविष्ये ) सा ( मध्याह्नव्यापिनी ग्राह्या तद्व्याप्त्यावव्याप्तौ वा परा ) तत्र प्रयोगः । देशकालौ संकीर्त्य । मम इहजन्मनि जन्मांतरे च अखंडितसंततिपुत्रपौत्रप्रवृद्धये श्रीभगवानीशंकरप्रीत्यर्थं मुक्ताभरणसप्तमीव्रते उमामहेश्वरपूजनं करिष्ये । इति संकल्प्य शिवाग्रे दोरकं विन्यस्य षोडशोपचारैः शिवं पूजयेत् । अथ प्रार्थना । महादेव महाराज प्रीत्या पापं प्रणाशय । अस्माकं कुर्वतां पूजा सात्र वाऽसाधुयोजिताम् ॥ १ ॥ ज्ञानतोऽज्ञानतो वापि भवतो विहिता च या । संपूर्णयतु तां पूजां विश्वेशो विमलो भवान् ॥ २ ॥ ( दोरकग्रहणमंत्रः ) देवदेव जगन्नाथ सर्वसौभाग्यदायक । गृह्णीयां दोररूपं त्वां पुत्रपौत्रप्रवर्द्धनम् ॥ ( दोरकबंधनमंत्रः ) सप्तसामोपगीतं त्वां धारयामि जगद्गुरो । सूत्रग्रंथिस्थितं नित्यं धारयामि स्थिरो भव ॥ ( अथजीर्णदोरकोत्तारणमंत्रः ) हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे । प्रसन्नः सन्नुमाकांत दीर्घायुःपुत्रदो भव ॥ ( अथ वायनम् ) मंडकान्वेष्टकान्वाथ सघृतान्दक्षिणायुतान् । एकादशशतं

कृत्वा ब्राह्मणाय कुटुंबिने ॥ वेदशास्त्र प्रवीणाय दद्यात्सोमस्य तुष्टये ॥ १ ॥ ॐ शंकरः प्रतिगृह्णाति शंकरो वै ददाति च । शंकरस्तारकोभाभ्यां शंकराय नमोनमः ॥ १ ॥ इति वायनं दद्यात् । तदेव द्रव्यं स्वयं भुंजीत एवं प्रतिवासं शुक्लसप्तम्यां कार्यम् । वर्षांते हैमीं वा राजतीं मुद्रिकां ताम्रपात्रोपरि संस्थाप्य ब्राह्मणेभ्यो दद्यात् । आचार्याय विशेषेण सुवर्णांगुलीयकं पुष्पकुंकुमतांबूलांजनछत्रयुतं सदक्षिणं गां च दद्यात् । ततो ब्राह्मणान् भोजयित्वा स्वयं भुंजीत । एवं या पूजनं कुर्याच्छिवस्य सुखदस्य । संतानवृद्धिं लब्ध्वा तु शिवलोके महीयते ॥ १ ॥ इति मुक्ताभरणसप्तमीव्रतोद्यापनम् ॥ अथ माघशुक्लसप्तम्यां रथसप्तमीव्रतम् ॥ तत्र अरुणोदये स्नानमाहात्म्यम् । ( स्मृतिसंग्रहे ) सूर्यग्रहणतुल्या सा शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां स्नानं तत्र महाफलम् । माघे मासि सिते पक्षे सप्तमी कोटिपुण्यदा । कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः । ( तत्र स्नानविधिः भविष्ये ) कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् । राज्यंते चालयेथास्त्वं दत्त्वा शिरसि दीपकम् । ( तथा जलं प्रक्रम्य ) न केन चाल्यते यावत्तावत्स्नानं समाचरेत् । सौवर्णे राजते ताम्रे भक्त्यालाबुमयेऽथवा । तैलेन वर्तिर्दातव्या महारजनरंजिता ( महारजनं कौसुंभम् ) समाहितमना

भूत्वा दत्त्वा शिरसि दीपकम् । भास्करं हृदये ध्यात्वा इमं मंत्रमुदीरयेत् ॥ नमस्ते रुद्ररूपाय रसानां पतये नमः । वरुणाय नमस्तेस्तु हरिदश्व नमोऽस्तु ते ॥ जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः इति । लोकार्के रथसप्तम्यां स्नात्वा गंगादिसंगमे । सप्तजन्मकृतैःपापैर्मुक्तो भवति तत्क्षणात् ॥ षष्ठीसप्तमीसंयोगे वारश्चेदंशुमालिनः । योगोयं पद्मको नाम सहस्रार्कग्रहैःसमः ( एतच्च स्नानं संकल्पं कृत्वा कार्यम् ) तत इक्षुदंडेन जलं चालयित्वा सप्तार्कपत्राणि सप्त बदरीपत्राणि शिरसि निधाय स्नायात् ॥ ( तत्र मंत्रः ) यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु । तन्मे रोगं च शोकं च माकरी हंतु सप्तमी ॥ १ ॥ स्नानानंतरमर्घ्यं च दातव्यम् । तत्र मन्त्रः । सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन । सप्तम्या सहितो देव गृहाणार्घ्यं दिवाकर ॥ १ ॥ जननी सर्वभूतानां सप्तमी सप्तसप्तिके । सप्तव्याहृतिके देवि नमस्ते सूर्यमंडले ॥ १ ॥ स्नानविधिः ॥ अथ व्रतविधानम् ( हेमाद्रौ भविष्ये ) षष्ठ्यां प्रातः शुक्लतिलैः नद्यादौ स्नात्वा नित्यकर्म कृत्वा सूर्यालयं गत्वा सूर्यं गंधपुष्पाक्षतैः संपूज्य प्रणम्य स्वगृहमागत्य अतिथिं संभोज्य तद्दिने तैलवर्जितमन्नं स्वयम् श्नीयात् ॥ ततो रात्रौ विप्रं समाहूय संपूज्य नियमं कुर्यात् । सप्तम्यां तु निराहारो

भूत्वा भोगविवर्जित । भोक्ष्येऽष्टम्यां जगन्नाथ निर्विघ्नं तत्र मे कुरु ॥ १ ॥ इत्युच्चार्य जलं जले निक्षिपेत् । ततो विप्रं विसृज्य भूमावेव स्वपेत् । ततःसप्तम्यां प्रातः अरुणोदयवेलायां पूर्वोक्त स्नानविधिना हरिद्रामलकचूर्णमृत्तिलैश्च सह स्नात्वा सन्ध्यादिनित्यावश्यकं कृत्वा । ॐ विभ्राड् बृहत्० इत्यादिसूर्यसूक्तं जपेत् । ततो गोमयोपलिप्तायां शुद्धभूमौ नदीतीरे वा गृहांगणे अश्वत्थ मूले वा तुलसीमूले गोगृहे वा वस्त्रादिना मंडपं कृत्वा तन्मध्ये वेदिकोपरि कुंकुमादिना अष्टदलं कृत्वा तत्र एकचक्रं हयान्वितं सौवर्णं वा राजतं संस्थाप्य तत्र सौवर्णां श्रीसूर्यप्रतिमां स्थाप यित्वा पूजयेत् । तत्रादौ ध्यानम् । द्विभुजं शंखचक्राढ्यं पद्मासनसमन्वितम् । मुहूर्त्तसमये सम्यग्ध्येयं नारायणं शुभम् ॥ १ ॥ इति ध्यात्वा पुरुषसूक्तेन ( स्त्रीशूद्राणां नाममन्त्रैश्च ) रक्त गंधाक्षतरक्तपुष्पगुग्गुलागुरुधूपपरमान्ननैवेद्यादिभिः षोडशोपचारैः संपूज्य । तदग्रे रजनीचूर्णेन कुंकुमेन वाष्टदलं विरच्य तत्र पूर्वादिक्रमेण । ॐ रवये नमः १ आदित्याय० २ सवित्रे० ३ मित्राय० ४ खगपतये० ५ सूर्याय० ६ भास्कराय० ७ दिवाकराय० ८ । मध्ये मित्राय नमः ९ नारायणाय नमः १० इति संपूज्य प्रार्थयेत् । तत्र मन्त्राः । भानो दिवाकरा दित्य मार्तंड जगतां

पते । अपांनिधे जगद्रक्ष भूतभावन भास्कर ॥ १ ॥ प्राणतार्तिहराचिंत्य विश्वचिंतामणे विभो । विष्णो हंसादिभूतेश आदिमध्यांतकारक ॥ २ ॥ भक्तिहीनं क्रियाहीनं मन्त्रहीनं जगत्पते । प्रसादात्तव संपूर्णमर्चनं यदिहास्तु मे ॥ ३ ॥ एवं स्तुत्वा स्वमनोभिलषितं प्रार्थयेत् ( ददाति प्रार्थितं भानुर्भक्त्या संतोषितो नरैः ) ततो रात्रौ जागरणं कृत्वा प्रातः स्नात्वा विप्रान्भूषणाच्छादनादिभिः संतोष्य यथोपस्करसंयुतं रथं रक्तवस्त्रं धेनुं च आचार्याय दद्यात् । ततो ब्राह्मणान्संभोज्य इष्टजनैः सह स्वयं भुंजीत । एवंविधं रथवरं वरवाजियुक्तं हैमं च हैमशतदीधितिना समेतम् । दद्याच्च माघसितसप्तमीवासरे यः सोऽसंगचक्रगतिरेव महीं भुनक्ति ॥ १ ॥ इति रथसप्तमीव्रतविधानम् ॥ अस्यामेव सप्तम्याम् अचलासप्तमीव्रतं पुत्रसप्तमीव्रतं च कुर्यात् । तद्विधानं तु व्रतराजे द्रष्टव्यम् । इति श्रीगौडपंडितश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे सप्तमीव्रतोद्यापनानि ॥ ॥

अथाऽष्टमीव्रतोद्यापनानि लिख्यंते ॥ तत्र तावत् बुधाष्टमीव्रतोद्यापनम् । सा च परयुता ग्राह्या । उद्यापनं तु बुधयुक्तायां शुक्लाष्टम्यां कार्यम् । ( व्रतराजे ) चैत्रमासि च सन्ध्यायां प्रसुप्ते च जनार्दने । बुधाष्टमी न कर्तव्या हंति पुण्यं पुरा कृतम् ॥ ॥ अथ बुधाष्टमीव्रतो

द्यापनप्रयोगः ॥ उद्यापनं तु आदौ मध्ये वा अंत्ये कार्यम् ॥ तत्र सप्तम्यां संकल्पपूर्वकं दंतधावनादि कृत्वा दशविप्रान्निमंत्र्य अष्टम्यां प्रातः गंगादितीर्थे स्नात्वा कृतनित्यक्रियः गृहमध्ये शुचौ देशे स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम इहजन्मनि जन्मांतरे च बाल्याद्यारभ्य कर्मणा मनसा जानताऽजानता वा स्वर्णाद्यपहृत दोषपरिहारपूर्वकपुत्रपौत्रादिसकलमनोरथप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं मयाचरितबुधाष्टमीव्रतोद्यापनं करिष्ये । इति संकल्प्य । तदंगत्वेन गणेशपूजनपुण्याहवाचनाद्याचार्यवरणांतं कर्म कुर्यात् । ततः आचार्यो रंगवल्ल्यादियुते देशे सर्वतोभद्रं विलिख्य तन्मध्ये पंचवर्णैरष्टदलं कृत्वा मध्ये कर्णिकायां पंचप्रस्थधान्योपरि पंचकलशान्मध्ये पूर्वादिदिक्षु च कलशस्थापनविधिना संस्थाप्य गंगाजले नापूर्य वस्त्रादिभिरलंकृत्य पंचपल्लवपंचरत्नसर्वौषधीसुवर्णादीन् तत्तन्मंत्रेण क्षिपेत् ॥ अशक्तश्चेत्तदा एकं ताम्रकलशं संस्थापयेत् । ततः कलशे पूर्णपात्रोपरि पट्टवस्त्रं प्रसार्य तत्र पंचवर्णैः कुंकुमेन वा अष्टदलं पद्मं कृत्वा तन्मध्ये ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳसृजेथामयंच । अस्मिन्त्सध स्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ १ ॥ इति मंत्रेण कर्षमात्रसुवर्णरचितां बुधप्रतिमां

बाणाकारां संस्थाप्य । तद्दक्षिणे अधिदैवतं विष्णुम् ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढम स्यपा९ंसुरेस्वाहा ॥ १ ॥ इति मंत्रेण स्थापयेत् । वामे प्रत्यधिदैवतं नारायणम् ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । सभूमिर्ठंसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ इति मंत्रेण स्थापयेत् । ततःकमलदलेषु पूर्वादिक्रमेण रविं० १ चन्द्रः०२ मङ्गलं० ३ गुरुं० ४ शुक्रं०५शनिं० ६ राहुं०७ केतुं ८ च स्थापयेत् । दलाग्रेषु पूर्वादिक्रमेण । अनंतं० १ वामनं० २ विष्णुं० ३ शौरिं० ४सत्यं० ५ जनार्दनं०६ हंसं० ७ नारायणं ८ च स्थापयेत् । ततस्तद्बाह्ये भूपुरे पूर्वादिदिक्षु । इंद्रं० १ अग्निं० २ यमं० ३ निर्ऋतिं० ४ वरुणं० ५ वायुं०६ कुबेरं० ७ ईशानं० ८ ईशानपूर्वयोर्मध्ये ब्रह्माणं० ९ निर्ऋतिपश्चिमयोर्मध्ये अनंतं १० च संस्थाप्य । दक्षिणे यमं० चित्रगुप्तं० श्यामलां च स्थापयेत् । एवं संस्थाप्य । पंचामृतपीतवस्त्रपीतगंधपुष्पाक्षतादिभिरुपचारैः पुरुषसूक्तेन तत्तन्नाममंत्रेण वा पूजयेत् । ततो मंडलपारितः अष्टाष्टलड्डुकयज्ञोपवीतफलदक्षिणायुतानष्टौ कलशान् संस्थाप्य गंधादिभिः संपूजयेत् । ततःपुष्पपूजांते अंगपूजा कार्या । बुधाय नमःपादौ पूजयामि १ सोमपुत्राय० जानुनी० २ तारकाय० कटी० ३ राजपुत्राय० उदरं० ४ इलाप्रियाय० हृदयं०

५ कुमाराय० वक्षः० ६ पूरुरवसः पित्रे० बाहू० ७ सोमसुताय०अंसौ० ८ पीतवर्णाय० मुखं०९ ज्ञानाय० नेत्रे० १० बुधाय० मूर्द्धानं० ११ इत्यंगपूजा । ततोऽर्घ्यदानम् । सौवर्णादिपात्रे पीतगंधाक्षतपुष्पयुतं जलमादाय जानुभ्यामवनीं गत्वा । उर्वश्याश्च गुरुर्यस्तु यः पुरूरवसः पिता । यो ग्रहाणामधिपतिर्बुधो नः संप्रसीदतु ॥ १ ॥ इत्यर्घ्यं दद्यात् । ततो रात्रौ कथाश्रवणादिना जागरं कृत्वा प्रातः स्नात्वा पुनः पूर्वोक्तप्रकारेण पूजयेत् ॥ ततो मण्डलात्पश्चिमे चतुरस्रं स्थंडिलं कृत्वा तत्र स्वशाखोक्तविधिना अग्निं प्रतिष्ठाप्य ( ग्रहमखपक्षे ग्रहान्संस्थाप्य पूजयेत् । केचित्पृथग्ग्रहणं नेच्छंति तेषां मंडलांतः पतितत्वात् ) ततः कुशकण्डिकां कृत्वा आघाराज्यभागांते । अपामार्गसमिद्यवव्रीहितिलगोधूमघृतद्रव्यैरष्टोत्तरशतम् । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसᳬसृजेथामयंच । अस्मिन्त्सधस्थेऽध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ १ ॥ इति मंत्रेण जुहुयात् । ततः ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳬसुरेस्वाहा । इदं विष्णवे २८ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । सभूमिᳬसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् स्वाहा । इदं नारायणाय २८ इति मंत्राभ्यां होमं कृत्वा आवरणदेवताभ्यश्चैकैकया आज्याहुत्या ( ग्रहमखपक्षे )

सूर्यादिग्रहेभ्योधिदेवादिभ्यश्च तत्तन्मंत्रेण अष्टाष्टसंख्यया जुहुयात् । ततः सर्वतोभद्रमंडलदेवताभ्यश्च एकैकया घृताहुत्या होमं संपाद्य स्विष्टकृदादिप्रायश्चित्तं हुत्वा बलिदानं पूर्णाहुतिं च संपाद्य आचार्यादीन् संपूजयेत् । आचार्यादयो यजमानमभिषिंचेयुः । ततो यजमानः प्रतिमाकलशवस्त्रादीनि गोदानं दक्षिणादानं च आचार्याय दत्त्वाअन्येभ्यो ब्राह्मणादिभ्यश्च पूर्वस्थापितान् कलशान् सदक्षिणाकान् दत्त्वा ब्राह्मणान्भोजयित्वा तदाशिषो गृहीत्वा स्वयं भुंजीत । यश्चाष्टमीं बुधयुतां समवाप्य भक्त्या संपूजयेच्छशिसुतं करकोपरिस्थम् ॥ पक्वान्नपात्रसहितं सहिरण्यवस्त्रं पश्यत्यसो यमपुरीं न कदाचिदेव ॥ १ ॥ इति भविष्योत्तरपुराणोक्तबुधाष्टमीव्रतोद्यापनप्रयोगः समाप्तः ॥ ॥ अथ शुक्लादि श्रावणकृष्णाष्टम्यां दशाफलव्रतं तदुद्यापनं च लिख्यते ॥ अष्टम्यां कृष्णजन्मसमये स्नात्वा । देशकालौ संकीर्त्य मम इहजन्मनि जन्मांतरे च कृतसमस्तपापक्षयार्थं दुःखशोकदारिद्र्यादिनाशपूर्वकसकलसुखसौभाग्यादिप्राप्तिद्वारा श्रीकृष्णप्रीत्यर्थं दशवर्षात्मकं दशाहं दशाफलव्रतं करिष्ये । इति संकल्प्य । पीठादौ श्रीकृष्णं संपूज्य दश तुलसीदलानि । ॐ कृष्णाय नमः १ विष्णवे नमः २ अनंताय नमः ३ गोविंदाय नमः ४ गरुडध्वजाय नमः ५ दामोदराय नमः ६ हृषीकेशाय नमः ७ पद्मनाभाय

नमः ८ हरये नमः ९ प्रभवे नमः १० इति दशनामभिः समर्पयेत् ॥ ततः ॐ नारायणाय देवाय गोकुलागारवासिने । दिव्यायदिव्यरूपाय बालकृष्णाय ते नमः । इति मंत्रेण संपूज्य तदग्रे दशगुणं दशग्रंथियुतं सूत्रं न्यस्य गंधादिभिः संपूज्य प्रदक्षिणाचतुष्टयं कृत्वा साष्टांग प्रणमेत् । ततस्तत्पुरतो दश पद्मानि पिष्टेन कृत्वा तत्सूत्रं कंठे हस्ते वा बध्नीयात् । तत्र मंत्रः । संसारार्णवमग्नानां नराणां पापकर्मणाम् । इहामुत्रफलार्थिं वै कुरुष्व पुरुषोत्तम ॥ १ ॥ एवं दशदिनं व्रतं कृत्वा दशमेऽहनि पूजनं कृत्वा प्रस्थ ( सेर ) मित गोधूमचूर्णेन शर्कराघृतयुतेन त्रिंशन्मोदकान्कृत्वा दश देवाय । दश ब्राह्मणाय । दश आत्मने च निवेदयेत् । ततो दशमोदकदशविधफलदक्षिणायुतं वायनं विप्राय दद्यात् । तत्र मंत्रः । त्रिलोकीनाथ देवेश सर्वभूतदया निधे । दानेनानेन देवेश यथोक्तफलदो भव ॥ १ ॥ इति दत्त्वा प्रार्थयेत् । देवदेव जगन्नाथ वाञ्छितार्थफलप्रद । व्रतेनानेन सुप्रीतो रक्ष त्वं भवसागरात् ॥ इति प्रार्थ्य ततो भोजनं कुर्यात् ( दशफलनामानि—नारिकेलं च दाडिंबं नारिंगं कदलीफलम् । पूगीफलं मातुलुंगं जंबीरं खर्जुरीयकम् । कर्कोटकीबदामादि दशाफलमिति स्मृतम् १० ) एवं दशवर्षपर्यंतं व्रतं कृत्वा अंत्ये उद्यापनं कार्यम् ॥ अथ उद्यापनप्रयोगः ॥ देशकालौ संकीर्त्य मम दुःखशोकदारिद्र्यादिनाशपूर्वकसकलसुख

सौभाग्यपुत्रपौत्रादिप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पूर्वाचरितदशवर्षात्मकदशाफलव्रतोद्यापनं करिष्ये । इति संकल्प्य पूर्ववद्गणेशपूजनादि आचार्यवरणांतं कर्म कुर्यात् । ततो वृताचार्यः सर्वतोभद्रस्थताम्रकलशोपरि सुवर्णमयीं श्रीकृष्णप्रतिमां संस्थाप्य पूर्वोक्तप्रकारेण सुवर्णमयतुलसीदलेन च पुरुषसूक्तेन षोडशोपचारैः संपूज्य रात्रौ कथाश्रवणादिना जागरणं कुर्यात् । ततः प्रातः स्नात्वा पुनः श्रीकृष्णं संपूज्य स्वसूत्रोक्तविधिना अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा प्रधानदेवकृष्णाय नाममंत्रेण वैदिकेन वा अश्वत्थसमिच्चरुतिलघृतादिद्रव्यैरष्टोत्तरशतसंख्यया हुत्वा सर्वतोभद्रमंडलदेवताभ्यश्च एकैकयाऽऽज्याहुत्या जुहुयात् । एवं होमं समाप्य पूर्वोक्तप्रकारेण वायनं दत्त्वा सोपस्करं पीठं गां च आचार्याय दद्यात् । ततो ब्राह्मणान्संभोज्य दक्षिणाभिः संतोष्य आशिषो गृहीत्वा भुंजीत ।
या भक्त्या कुरुते नारी व्रतानामुत्तमं व्रतम् । सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥ १ ॥
इति भविष्योत्तरोक्तदशाफलव्रतोद्यापनं समाप्तम् ॥ ॥ अथ भाद्रपदकृष्णाष्टम्यां जन्माष्टमीव्रतम् ॥ तच्चार्धरात्रव्यापिन्यां कार्यम् । तत्र प्रयोगः । पूर्वदिने दंतधावनपूर्वकं कृतैकभक्तो व्रतदिने कृतनित्यक्रियो देवताः प्रार्थयेत् । सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा । पवनो दिक्पतिर्भूमिरा

काशं खेचरामराः ॥ ब्रह्मेशानं समारभ्याय कल्पंतामिह सन्निधिम् ॥ इत्युक्त्वा सफल पुष्पाक्षतजल पूर्णताम्रपात्रमादाय । देशकालौ संकीर्त्य मम इह जन्मनि जन्मांतरे च समस्तपापक्षयपूर्वकधर्मार्थकाममोक्षफलप्राप्तिद्वारा श्रीकृष्णचंद्रप्रीतये कृष्णजन्माष्टमीव्रतं करिष्ये । इति संकल्प्य । वासुदेवं समुद्दिश्य सर्वपापप्रशांतये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥ १ ॥ अद्य कृष्णाष्टमीं देवीं नभश्चंद्रं सरोहिणीम् । अर्चयित्वोपवासेन भोक्ष्येहमपरेऽहनि ॥ २ ॥ एनसो मोक्षकामोस्मि यद्गोविंदवियोजनम् । तन्मे मुंचतु मां त्राहि पतितं शोकसागरे ॥ ३ ॥ आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् । तत्प्रणाशय गोविंद प्रसीद पुरुषोत्तम ॥ ४ ॥ इत्युक्त्वा पात्रस्थं जलं निक्षिपेत् । ततः कदलीस्तंभवासोभिराम्रपल्लवयुतसजलपूर्णकलशैर्दीपैः पुष्पमालाभिर्युतमगरुधूपितमग्निखड्गकृष्णच्छागर क्षामणिद्वारन्यस्तमुसलादियुतं मंगलोपेतं षष्ठ्या देव्याधिष्ठितं देवक्याः सूतिकागृहं विधाय तस्य समंतात् भित्तिषु कुसुमांजलीन् देवगंधर्वादीन् खड्गचर्मधरं वसुदेवं देवकीनंदयशोदागर्गगोपीगोपान् कंसनियुक्तान् गोधेनुकुंजरान् यमुनां तन्मध्ये कालियमन्यच्च तत्कालीनं गोकुलचरितं यथासंभवं लिखित्वा सूतिकागृहमध्ये प्रच्छादनपटावृतं मंचकं स्थाप

यित्वा मध्याह्ने नद्यादौ भस्मादिभिरष्टौ स्नानानि कृत्वा शरीरशुद्धिं संपाद्य अर्द्धरात्रे श्रीकृष्णं सपरिवारं पूजयेत् ॥ अथ उद्यापनप्रयोगः ॥ तत्रादावाचम्य प्राणानायम्य देशकालौ संकीर्त्य मम अखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरितकृष्णजन्माष्टमीव्रतोद्यापनं करिष्ये । इति संकल्प्य । तदंगतया गणेशपूजनपुण्याहवाचनाद्याचार्यवरणांतं कर्म पूर्ववत्कुर्यात् ॥ तत आचार्यः । गोमयादिलिप्तशुद्धदेशे पंचवर्णवस्त्रपुष्पमालाफलादिशोभिते मण्डपे वेद्यां सर्वतोभद्रमंडले ब्रह्मादीन् संपूज्य तत्र मध्ये ताम्रकलशं संस्थाप्य तदुपरि पूर्णपात्रं निधाय तत्र रौप्यमये पर्यंके सौवर्णीं देवकीं तदुत्संगे बालकं स्तनपायिनं सौवर्णं श्रीकृष्णं च ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् । समूढमस्यपाᳪंसुरेस्वाहा ॥ १ ॥ इति मन्त्रेण स्थापयेत् । अथ पूजनम् । तत्रादौ आचम्य प्राणानायम्य देशकालौ स्मृत्वा । मम धर्मार्थकाममोक्षाख्यचर्विधपुरुषार्थसिद्ध्यर्थं श्रीकृष्णप्रीत्यर्थं च पुरुषसूक्तविधानेन यथासंभवमिलितोपचारैः कृष्णजन्माष्टमीव्रतोद्यापनकर्मणि परिवारसहितश्रीकृष्णपूजनमहं करिष्ये । इति संकल्प्य । तदंगत्वेन कलशार्चनं शंखार्चनं पुरुषसूक्तेन न्यासांश्च कुर्यात् । ततो घंटानादं कृत्वा

प्रतिमायाः प्राणप्रतिष्ठां विधाय ध्यानं कुर्यात् । ध्यायेच्चतुर्भुजं देवं शंखचक्रगदाधरम् ॥ पीतांबर युगोपेतं लक्ष्मीयुक्तं विभूषितम् ॥ लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनम् ॥ १ ॥ इति ध्यात्वा पुरुषसूक्तेन आवाहनादिषोडशोपचारैः संपूजयेत् । तद्यथा । ॐ देवक्यै नमः देवकी मावाहयामि १ इति देवकीम् । ॐ श्रीकृष्णाय नमः इति तत्प्रतिमायां श्रीकृष्णमावाह्य २ ॐ नमो देव्यै श्रियै इति श्रियं० ३ ॐ वसुदेवाय नमः इति वसुदेवं ४ ( एवं सर्वत्र ज्ञातव्यम् ) ॐ यशोदायै नमः ५ ॐ नंदाय नयः ६ ॐ बलदेवाय नमः ७ ॐ चंडिकायै नमः ८ ॐ रोहिण्यै नमः ९ ॐ सुभद्रायै नमः १० इत्यावाह्य परितः मत्स्यादिदशरूपेभ्यो नमः ११ आदित्यादि ग्रहेभ्यो नमः १२ अश्विन्यादिसप्तविंशतिनक्षत्रेभ्यो नमः १३ देवेभ्यो नमः १४ नागेभ्यो नमः १५ यक्षेभ्योः नमः १६ विद्याधरेभ्यो नमः १७ यमुनायै नमः १८ कालियाय०१९ कंसाय० २० गोभ्यो नमः २१ योगनिद्रायै० २२ चन्द्रमसे नमः २३ सात्यकये नमः २४ उद्धवाय० २५ अक्रूराय० २६ उग्रसेनाय० २७ यादवेभ्यो नमः २८ शंखाय० २९ चक्राय० ३० गदायै० ३१ पद्माय० ३२ त्रुटये० ३३ कालात्मने० ३४ अहोरात्राय० ३५ मासाय० ३६ संवत्सराय० ३७

व्र० ॥७३॥

सर्वात्मने० ३८ द्वारपालेभ्यो नमः ३९ पुण्यशीलाय० ४० सुशीलाय० ४१ जयाय० ४२ विजयाय० ४३ पुरतः ॐ गरुडाय नमः ४४ एवं नाममंत्रैरावाह्य । ॐ सपरिवाराय कृष्णाय नमः इति मंत्रेण पुरुषसूक्तमन्त्रेण च पृथक्पृथक् षोडशोपचारैः पूजयेत् । पुष्पपूजांते अंगपूजा कार्या तद्यथा । ॐ गोविंदाय नमः पादौ पूजयामि १ माधवाय० जंघे० २ मधुसूदनाय० कटी पू० ३ पद्मनाभाय० नाभिं पू० ४ हृषीकेशाय० हृदयं पू० ५ संकर्षणाय० स्तनौ पू० ६ वामनाय० बाहू पू० ७ दैत्यसूदनाय० हस्तौ पू० ८ हरिकेशाय० कंठं पू० ९ चारुमुखाय० मुखं पू० १० त्रिविक्रमाय० नासिकां पू० ११ पुंडरीकाक्षाय० नेत्रे पू० १२ नृसिंहाय० श्रोत्रे पू० १३ उपेंद्राय० ललाटं पू० १४ हरये० शिरः पू० १५ श्रीकृष्णाय नमः सर्वांगं पूजयामि १६ एवं पूजां समाप्य साष्टांगं प्रणम्य प्रार्थयेत् । नमस्तुभ्यं जगन्नाथ देवकीतनय प्रभो । वसुदेवात्मजानंत यशोदानंदवर्द्धन । गोविंद गोकुलाधार गोपीकांत नमोस्तु ते ॥ इति प्राथ्य जातकर्मनालच्छेदषष्ठीपूजानामकर्मकर्माणि संक्षेपतः कृत्वा पुरतः अभयावचाशुंठीगुडूचीमरिचपिप्पलीशस्त्राणि स्थापयेत् । ततश्चंद्रोदये शंखे पुष्पाक्षतचन्दनकुशनारिकेलयुतं जलं गृहीत्वा । श्रीकृष्णायाऽर्घ्यं दद्यात् । तत्र मंत्रः । जातः कंस

वधार्थाय भूभारोत्तारणाय च । कौरवाणां विनाशाय दैत्यानां निधनाय च ॥ पांडवानां हितार्थाय
धर्मसंस्थापनाय च । गृहाणार्घ्यं मया दत्तं देवकीसहितो हरे ॥ इति एवमेव अंगणे भूमौ राजतं चन्द्र
बिंबं संपूज्य पूर्ववत् शंखं गृहीत्वा जानुभ्यामवनीं गत्वा चंद्राय अर्घ्यं दद्यात् । तत्र मंत्रः । क्षीरो
दार्णवसंभूत लक्ष्मीबंधो निशाकर । गृहाणार्घ्यं मया दत्तं रोहिण्यासहितः शशिन् ॥ १ ॥ ज्योत्स्ना
याः पतये तुभ्यं ज्योतिषां पतये नमः । नमस्ते रोहिणीकांत सुधावास नमोस्तु ते ॥ २ ॥ नमो
मंडलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्द्धमानाय नमश्चंद्राय चारवे ॥ ३ ॥ ( ततो रोहिण्यै
अर्घ्यं दद्यात् ) दक्षस्य दुहिता साध्वी रोहिणी नाम नामतः । सोमेन सहिते देवि गृहाणार्घ्यं नमोस्तु ते ॥
॥ अथ प्रार्थना ॥ अनंतं वामनं शौरिं वैकुंठं पुरुषोत्तमम् । वासुदेवं हृषीकेशं माधवं मधुसूद
नम् ॥ १ ॥ वाराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनम् । दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥ २ ॥
गोविंदमच्युतं कृष्णमनंतमपराजितम् । अधोक्षजं जगद्बीजं सर्गस्थित्यंतकारिणम् ॥ ३ ॥ अनादिनि
धनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ॥ ४ ॥ पीतांबरधरं नित्यं
वनमालाविभूषितम् । श्रीवत्सांकं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ॥ ५ ॥ शरणं त्वां प्रपद्येहं सर्वकामार्थ

सिद्धये ॥ प्रणमामि महादेवं वासुदेवं जगत्पतिम् ॥ ६ ॥ ( इति मंत्रैः प्रणम्य ) त्राहि मां सर्वलोकेश हरे संसारसागरात् । त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो ॥ ७ ॥ सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे । देवकीनंदन श्रीश हरे संसारसागरात् ॥ ८ ॥ त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे । दुर्वृत्तांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् ॥ ९ ॥ सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् । पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे ॥ १० ॥ त्राहि मां देवदेवेश त्वत्तो नान्योस्ति रक्षिता । यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके ॥ ११ ॥ तत्पुण्यं वृद्धिमायातु पापं हर हलायुध ॥ इत्यपराधान् क्षमाप्य । ततः स्तोत्रं पठन् पुराणश्रवणादिना जागरं कुर्यात् ॥ ततो द्वितीयेह्नि प्रातःकाले स्नानसंध्यादिनित्यकर्म कृत्वा पूर्ववद्देवं सांगं सर्वतोभद्रमंडलदेवांश्च संपूज्य अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते प्रधानदेवश्रीकृष्णाय । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपा१९सुरेस्वाहा ॥ १ ॥ इति मंत्रेण ( स्त्रीशूद्रव्रात्यानां नाममंत्रेण ) अथवा सर्वेषां द्वादशाक्षरेण अष्टाक्षरेण वा पायसतिलयवव्रीहिघृतादिद्रव्यैरष्टोत्तरशतं हुत्वा पुरुषसूक्ततः प्रत्यृचमेकैकयाऽऽज्याहुत्या महाव्याहृतिभिश्च अष्टाविंशतिसंख्याज्याहुतिभिर्होमं कुर्यात् ॥

ततःपूर्वोक्तपरिवारदेवताभ्यो ब्रह्मादिमंडलदेवताभ्यश्च एकैकाज्याहुतिं हुत्वा स्विष्टकृदादिपूर्णाहुत्यंतं होमशेषं समापयेत् । ततः । आचार्ये वस्त्राभूषणादिभिर्भक्त्या संपूज्य सोपस्करां श्रीकृष्णप्रतिमां दद्यात् ( तत्र मंत्रौ ) श्रीकृष्णःप्रतिगृह्णाति श्रीकृष्णो वै ददाति च । श्रीकृष्णस्तारकोभाभ्यां श्रीकृष्णाय नमोनमः ॥ १ ॥ कृष्णायानंतरूपाय दास्यामि प्रतिमामिमाम् । द्रव्यं विष्णुसमुद्भूतमतः शांतिं प्रयच्छ मे ॥ २ ॥ ततो व्रतपूर्त्तये पयस्विनीं सुशीलां सवत्सां सोपस्करां कपिलाम् अभावे त्वन्यां वा धेनुं च दद्यात् । ततः सोपस्करशय्यादानं कृत्वा ऋत्विगादिभ्यो यथाशक्ति दक्षिणां दत्त्वा दीनांधकृपणांश्च यथार्हं संतोष्य आशिषो गृहीत्वा शतमष्टं पंचविंशतिं वा दशाष्टौ वा ब्राह्मणान्संभोज्य तेभ्यः अष्टावन्नपूर्णान् कलशान् दद्यात् । विप्राज्ञया बंधुभिः सह भुंजीत ॥ एवं कृते महाराज व्रतोद्यापनकर्मणि । निष्पापस्तत्क्षणादेव जायते विबुधोपमः ॥ १ ॥ पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । भुक्त्वा भोगांश्चिरं कालमंते मम पुरं व्रजेत् ॥ २ ॥ इति भविष्यपुराणोक्तकृष्णजन्माष्टमीव्रतोद्यापनप्रयोगः ॥ अथ भाद्रशुक्लाष्टम्यां ज्येष्ठर्क्षे ज्येष्ठाव्रतम् ॥ ( स्कंदपुराणे ) मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते । यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥ तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठ

र्क्षमेवच । नीज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी ॥ इति ( इदं च ज्येष्ठायोगवशेन पूर्वविद्धायां परविद्धायां वा कार्यम् । दिनद्वये तद्योगे परैव । पूर्वेद्यू रात्रौ तद्योगे पूर्वैव अन्यत्र विशेषः) अथोद्यापन प्रयोगः ॥ देशकालौ संकीर्त्य मम अलक्ष्मीपरिहारपूर्वकधनधान्यपुत्रपौत्रसौभाग्यादिवृद्धिद्वाराश्रीज्येष्ठा देवताप्रीत्यर्थममुककामनासिद्ध्यर्थं वा ज्येष्ठाव्रतं तदुद्यापनं करिष्ये । इति संकल्प्य अष्टदले पद्मे ताम्र कलशं यथाविधिना संस्थाप्य तदुपरि पलप्रमाणां कर्षप्रमाणां वा सौवर्णीं ज्येष्ठाप्रतिमां संस्थापयेत् । ततः ॐ त्रिलोचनां शुक्लदंतां बिभ्रतीं राजतीं तनुम् । विरक्तां रक्तनयनां ज्येष्ठामावाहयाम्यहम् ॥ १ ॥ इत्यावाह्य । ॐ ज्येष्ठायै नमः इति नाममंत्रेण आसनं पाद्यम् अर्घ्यम् आचमनं च दत्त्वा । ॐ आपोहिष्ठामयोभुवरित्यादितिसृभिर्मंत्रैः ॐ हिरण्यवर्णेति चतसृभिश्चाभिषेकं कुर्यात् । तत आचमनं मधुपर्कं कंचुकीं वस्त्रगंधाक्षतान् पुष्पधूपदीपनैवेद्याचमनीयकरोद्वर्तनतांबूलदक्षिणानीराजना दींश्च समर्प्य अर्घ्यं दद्यात् । तत्र मंत्रः । ज्येष्ठे श्रेष्ठे ब्रह्मिष्ठे सत्यवादिनि । एह्येहि त्वं महामाये अर्घ्यं गृह्ण नमोस्तु ते ॥ ( प्रार्थना ) यस्याः सिंहो रथे युक्तो व्याघ्रश्चापि महाबलः । ज्येष्ठामहमिमां देवीं प्रपद्ये शरणं शुभाम् ॥ ततो रात्रौ जागरणं कृत्वा प्रातः पुनः संपूज्य । स्थापितेऽग्नौ ततः

पश्चाद्धोममष्टोत्तरं शतम् । द्रव्यैर्दधिमधुक्षीरघृतैः कुर्यात्प्रयत्नतः । तर्पणं च ततः कुर्यादेभिर्मंत्रै विंचक्षणः ॥ ॐ ज्येष्ठायै नमः ज्येष्ठां तर्पयामि १ ( एवं सर्वत्र ) श्रेष्ठायै० २ सत्यायै० ३ कलिनाशिन्यै० ४ विद्यायै० ५ वैनायक्यै० ६ तपोनिष्ठायै० ७ ॥ श्रियै० ८ कृष्णायै० ९ ब्रह्मिष्ठायै० १० ॥ विसृज्य च ततो देवीं ज्येष्ठायाः प्रतिमां शुभाम् । कृष्णवस्त्रेण संयुक्तामाचार्याय निवेदयेत ॥ वस्त्राभरणमाल्यादिलेपनैः पूजितं द्विजम् । प्रणिपत्य ततः पश्चात्तस्मै सर्वं निवेदयेत् ॥ ब्राह्मणान् भोजयेत्पश्चात्स्वयं भुंजीत वाग्यतः । ब्राह्मणांश्च ततो नत्वा याचयेत्सर्वमंगलम् ॥ एवं भोज्याः सुवासिन्यः पूज्याः सर्वसमृद्धये । एवं कृते व्रते सम्यक् सर्वशांति प्रजायते । धनधान्यसमृद्धिश्च आरोग्यं भवति ध्रुवम् ॥ इति भविष्योत्तरपुराणोक्तज्येष्ठादेवीव्रतोद्यापनम् ॥ अथ भाद्रपदशुक्लाष्टम्यामपि दूर्वाष्टमीव्रतम् ॥ ( अत्र सा पूर्वा ग्राह्या ) भविष्ये ) प्रातः शुक्लतिलैर्नद्यादौ स्नात्वा देशकालौ संकीर्त्य मम इह जन्मनि जन्मांतरे च अखंडसौभाग्यपुत्रपौत्रादिलक्ष्मीप्राप्त्यर्थं दूर्वाष्टमीव्रतं करिष्ये । इति संकल्प्य । उदीचीं दिशं गत्वा दूर्वामूलं नमस्कृत्य प्रार्थयेत् । त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः । सौभाग्यं संततिं देहि सर्वकार्यकरी भव ॥ १ ॥ यथा शाखाप्रशाखा

व्र०
॥७६॥

भिर्विस्तृतासि महीतले । तथा विस्तृतसंतानं देहि त्वमजरामरे ॥ २ ॥ ततस्तत्रैव गृहे वा वितस्ति
मात्रां दूर्वामानीय पीठे संस्थाप्य तत्र तन्मूले । शिवं गणेशं च संस्थाप्य । तन्नाममंत्रेण षोड
शोपचारैः पूजयेत् ( ततो दूर्वापूजा ) आगच्छ देवि दूर्वे त्वं सर्वसंपत्प्रदायिनि । यावद्व्रतं समाप्येत
तावत्त्वं संनिधा भव ॥ १ ॥ इत्यावाह्य दध्यक्षतैः स्रजोभिश्च पूजनं कुर्यात् । खर्जूरीनारिकेलमातुलुंग
द्राक्षाबदरलकुचजंबीरबीजपूरदाडिमीफलैर्नैवेद्यं समर्प्य तैरेव युक्तं वायनं च विभाय दद्यात् ।
ततः । विष्णुदेहसमुद्भूते दूर्वे त्वं हि प्रसीद मे । वंदिता सर्वदेवैस्तु गम्यतां निजमंदिरम् ॥ १ ॥
इति विसृज्य सदन्नेन ब्राह्मणान्संतर्प्य स्वयमग्निपक्वमन्नं दधिफलमक्षारलवणमश्नीयात् । एवं
प्रतिमासं शुक्लाष्टम्यां कृत्वा संवत्सरान्ते उद्यापनं कुर्यात् । तत्र प्रयोगः देशकालौ संकीर्त्य
मम इह जन्मनि जन्मांतरे च अखंडसौभाग्यपुत्रपौत्रादिलक्ष्मीप्राप्त्यर्थमाचरितदूर्वाष्टमीव्रतो
द्यापनं करिष्ये इति संकल्प्य । गणेशपूजनादि आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः । आचार्यः
सर्वतोभद्रमंडलस्थताम्रकलशोपरि वंशपात्रे सप्तधान्ययुक्ते हैमीं रौप्यमूलयुतां दूर्वां संस्थाप्य
पूर्वोक्तप्रकारेण पूजयित्वा रात्रौ जागरणं कुर्यात् । प्रातरग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्य

भागांते । प्रधानदेवतागौर्य्यै ॐ काण्डात्काण्डात्प्ररोहंतीपरुषः परुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इति मंत्रेण तिलैराज्येन चाष्टोत्तरशतं हुत्वा मंडलदेवताभ्यश्च एकैकामाहुतिं दत्त्वा होमशेषं समाप्य ब्राह्मणेभ्यस्तिलपिष्टगोधूमसप्तधान्यानिः पूर्वोक्तानि च फलानि अभावे देशकालोद्भवानि फलानि वायनत्वेन दत्त्वा आचार्यं वस्त्रादिभिः संपूज्य सोपस्करं पीठं प्रतिमां व्रतपूर्त्तये गां च दत्त्वा द्वादशब्राह्मणान्सदन्नेन भोजयित्वा आशिषो गृहीत्वा स्वयं भुंजीत । एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता । चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः ॥१॥ दूर्वाष्टमीव्रतं पुण्यं यः करोतीह मानवः । न तस्य क्षयमाप्नोति संततिः साप्तपौरुषी ॥ नंदते वर्द्धते नित्यं यथा दूर्वा तथा कुलम् ॥ २ ॥ इति भविष्योत्तरपुराणोक्तदूर्वाष्टमीव्रतोद्यापनप्रयोगः ॥ ॥ अथ भाद्रपदशुक्लाष्टमीमारभ्य षोडश दिनपर्यंतं महालक्ष्मीव्रतम् ॥ तच्च अर्द्धरात्रातिक्रमवर्तिन्यामष्टम्यां कार्यम् । अत्र ज्येष्ठायुतायां प्राशस्त्यम् ॥ तत्र प्रयोगः ॥ अष्टम्यां प्रातः षोडशावारं अंघ्री करौ मुखं च प्रक्षाल्य वामभागे षोडशगंडूषांश्च कृत्वा कातीयस्नानविधिना नद्यादौ स्नात्वा नित्यकर्म कृत्वा संकल्पं कुर्यात् । तद्यथा । देशकालौ संकीर्त्य । मम सकलदौर्भाग्यदुःखनिबर्हणपूर्वकधनधान्यैश्वर्यपुत्रपौत्राद्यभि

वृद्धिद्वारा श्रीमहालक्ष्मीप्रीत्यर्थं महालक्ष्मीव्रतं करिष्ये । इति संकल्पयेत् । ततः षोडश तंतुमयं षोडशग्रंथियुतं सूत्रं निर्माय विमलासने संस्थाप्य । तत्र महालक्ष्मि समागच्छ पद्मनाभपदादिह ॥ पंचोपचारपूजेयं त्वदर्थं परिकल्पिता ॥ भो लक्ष्मि इहागच्छ इत्यावाह्य षोडशदूर्वांकुरैर्मालतीपुष्प कर्पूरचंदनादिभिः श्रीसूक्तेन । ॐ महालक्ष्म्यै नमः इति नाममंत्रेण संपूज्य प्रार्थयेत् । धनं धान्यं धरां धर्मं कीर्तिमायुर्यशः श्रियम् ॥ तुरगान्दंतिनः पुत्रान्महालक्ष्मि प्रयच्छ मे ॥ १ ॥ विष्णोर्वक्षसि पद्मे च शंखे चक्रे तथांबरे । लक्ष्मीदेवि यथासि त्वं गृहे सूत्रे तथा वस ॥ २ ॥ इति प्रार्थ्य पुरुषेण दक्षिणकरे स्त्रिया वामकरे कंठे वा बद्ध्वा कथां श्रुत्वा भुंजीत । एवं कृष्णाष्टमीपर्यंतं प्रत्यहं तदेव सूत्रमुत्तार्य । ॐ लक्ष्मीदेवि गृहाण त्वं दोरकं यन्मया धृतम् ॥ व्रतं संपूर्णतां यातु कृपा कार्या मयि त्वया ॥ १ ॥ इति मंत्रेण लक्ष्मीपार्श्वे निवेद्य संपूज्य धारयेत् । कृष्णाष्टम्यां प्रातः वस्त्रगृहं रंगवल्ल्यादिभिर्युतं कृत्वा तत्र अष्टदलमिंद्रादिशक्तियुतं निर्माय तत्र काष्ठमृच्चंदनादिभिरचितां चतुर्भुजां गजपृष्ठागतां श्रीमहालक्ष्मीप्रतिमां संस्थाप्य तदग्रे पूर्ववन्नूतनं सूत्रं प्रतिष्ठाप्य पूजां कुर्यात् । पुष्प० जांते अंगपूजा कार्या । तद्यथा । चपलायै नमः पादौ पूजयामि १ चंचलायै० जानुनी० २कमलवासिन्यै पू

कटी पू० ३ शांत्यै० नाभिं पू० ४ मन्मथवासिन्यै० स्तनौ पू० ५ ललितायै० भुजद्वयं पू० ६ कंबुकंठ्यै० कंठं पू० ७ मायायै० मुखं पू० ८ श्रियै० शिरः पू० ९ रमायै नमः सर्वांगं पूजयामि १०इत्यावरणपूजां कृत्वा पूर्ववत् षोडशोपचारैः संपूज्य प्रार्थ्य तन्नूतनसूत्रं पूर्ववद्धृत्वा षोडश नमस्कारान् कुर्यात् ॥ ततो जीर्णदोरकं पूर्वोक्तमंत्रेण लक्ष्मीपार्श्वे निवेद्य ब्राह्मणान्संपूज्य शूर्पे षोडश दीपान् षोडश गोधूमलड्डुकांश्च निधाय दद्यात् । ततो वायनं दद्यात् । तत्र मंत्रः । चतुर्द्वादशसंख्याकान्दीपान्पिंडान्घृतप्लुतान् ॥ गृहाण त्वं द्विजश्रेष्ठ वायनं प्रीतये श्रियः ॥ १ ॥ ततश्चंद्रोदये सति चंद्रं संपूज्य अर्घ्यं दद्यात् । तत्र मंत्रः । नमस्तु निशानाथ लक्ष्मीभ्रातर्नमोऽस्तु ते ॥ व्रतं संपूर्णतां यातु गृहाणार्घ्यं विधो मम ॥ १ ॥ ततो भोजनं कृत्वा रात्रौ जागरणं कुर्यात् । ततः प्रातः । ॐ पंकजं देवि संत्यज्य मम वेश्मनि संविश ॥ यथा सपुत्रभृत्योहं सुखी स्यां त्वत्प्रसादतः ॥ १ ॥ इति मंत्रेण लक्ष्मीं विसृज्य । तत्सूत्रं वर्षपर्यंतं धारयेत् ॥ एवं षोडशवर्षपर्यंतम् अशक्तौ षोडशादिनं वाऽऽचरित्वा अन्ते उद्यापनं कुर्यात् ॥ अथ उद्यापनप्रयोगः ॥ देशकालौ संकीर्त्य मम सकलदौर्भाग्यदुःखनिबर्हणपूर्वकधनधान्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीमहालक्ष्मीप्रीत्यर्थम् आचरितमहालक्ष्मीव्रतोद्यापनं

करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः आचार्यः सर्वतोभद्र स्थताम्रकलशे हैमीं महालक्ष्मीप्रतिमां ॐ श्रीश्चतेलक्ष्मीश्च० १ इति मंत्रेण संस्थाप्य श्रीसूक्तेन षोडशोपचारैः संपूज्य पुष्पपूजांते नामपूजां कुर्यात् । ॐ श्रियै नमः १ लक्ष्म्यै नमः २ वरदायै० ३ विष्णुपत्न्यै० ४ क्षीरसागरवासिन्यै० ५ हिरण्यरूपायै ० ६ सुवर्णमालिन्यै० ७ पद्मवासिन्यै० पद्मप्रियायै० ९ मुक्तालंकारिण्यै० १० सूर्यायै० ११ चन्द्राननायै० ॥ १२ विश्वमूर्त्यै० १३ मुक्त्यै० १४ ॥ मुक्तिदात्र्यै० १५ ऋद्ध्यै० १६ ॥ समृद्ध्यै० १७ तुष्ट्यै० १८ पुष्ट्यै० १९ धनेश्वर्य्यै० २० श्रद्धायै० २१ भोगिन्यै० २२ भोगदायै० २३ धात्र्यै० २४ इति नामभिःसंपूज्य चन्द्रायार्घ्यं दद्यात् । नमस्तेऽस्तु निशानाथ लक्ष्मीभ्रातर्नमोस्तु ते व्रतं संपूर्णतां यातु गृहाणार्घ्यं विधो मम ॥ ततो देवीं प्रार्थयेत् ॥ क्षीरोदार्णवसंभूते कमले कमलालये ॥ प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये ॥ १ ॥ पुत्रान्देहि धनं देहि सौख्यं सौभाग्यमेव च ॥ कुरु श्रियं महालक्ष्मीमलक्ष्मीं त्वाशु नाशय ॥ २ ॥ इति प्रार्थ्य रात्रौ जागरणं कुर्यात् । ततः प्रातः स्नात्वा पुनः पूर्ववन्महालक्ष्मीं संपूज्य अग्निं प्रतिष्ठाप्य आज्यभागांते प्रधानदेवतामहा

लक्ष्म्यै घृताक्तपायसबिल्वाज्यैः श्रीश्चतेलक्ष्मीश्चेति मन्त्रेणाष्टोत्तरशत हुत्वा श्रीसूक्तेन प्रत्यृचं कमलैर्होमं कुर्यात् । ततो मंडलदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समाप्य आचार्यं संपूज्य सोपस्करां लक्ष्मीप्रतिमां गां च दद्यात् । ततः षोडश मिथुनानि वस्त्रादिभिः पूजयित्वा शूर्पे षोडश नानाविधभक्ष्याणि चंदनताडपत्रपूगीफलानि पत्राणि च निक्षिप्य अन्यशूर्पेणाच्छाद्य दद्यात् । क्षीरोदार्णवसंभूता लक्ष्मीश्चंद्रसहोदरा । व्रतेनानेन सन्तुष्टा प्रीयतां विष्णुवल्लभा ॥ ततः षोडश ब्राह्मणान्संतर्प्य आषिशो गृहीत्वा भुंजीत ॥ इति महालक्ष्मीव्रतोद्यापनप्रयोगः ॥ अथ मार्गशीर्षकृष्णाष्टम्यां कालभैरवाष्टमीव्रतम् । तच्च रात्रिव्यापिन्यां कार्यम् । ( काशिखंडे ) मार्गशीर्षसिताष्टम्यां कालभैरवसन्निधौ । उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते ॥ कृत्वा च विविधां पूजां महासंभारविस्तरैः । नरो मार्गसिताष्टम्यां वार्षिकं विघ्नमुत्सृजे ॥ अथ तदुद्यापनम् ( प्रभात खण्डे ) उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः । मंडले कारयेदादो लिंगतोभद्रसंज्ञकम् ॥ १ ॥ कलशं निविशेत्तत्र पंचरत्नसमन्वितम् ॥ निष्केण वा तदर्द्धेन तदर्द्धेनैव वा पुनः ॥ २ ॥ शक्त्या वा कारयेद्देवं सौवर्णं भैरवं शुभम् ॥ वाहनायुधसंयुक्तं विन्यसेत्कलशे बुधः ॥ ३ ॥ भूषणैश्चंदनैः

पुष्पैर्दीपैर्नैवेद्यसंचयः ॥ एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् ॥ ४ ॥ श्वोभूते कृतमांगल्ये वह्निं स्थाप्य ग्रहान्न्यसेत् ॥ होमं कुर्यात्प्रयत्नेन तिलाज्येन विचक्षणः ॥ ५ ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ भैरवायेति मन्त्रेण होमं कुर्याद्यथाविधि ॥ ६ ॥ व्रतसंपूर्णसिद्ध्यर्थं धेनुं दद्यात्पयस्विनीम् ॥ शय्यां सोपस्करां दद्याद्ब्राह्मणाय कुटुंबिने ॥ ७ ॥ अष्टौ च भोजयेद्विप्रांस्ते भ्यो दद्याच्च दक्षिणाम् ॥ फलमाप्नोति सकलं शिवसायुज्यमाप्नुयात् ॥ ८ ॥ इति प्रभासखंडोक्त भैरवाष्टमीव्रतोद्यापनम् ॥ अथ कृष्णाष्टमीव्रतम् ॥ तच्च मार्गशीर्षकृष्णाष्टम्यां व्रतं प्रगृह्य प्रतिमासं कृष्णाष्टम्यां वर्षपर्यंतं व्रतं कार्यम् । तद्विधिस्तु व्रतराजे द्रष्टव्यः । अथ तदुद्यापनं लिख्यते । ( आदित्यपुराणे ) उद्यापनं च वर्षांते प्रकुर्याद्भक्तितत्परः ॥ विरच्य लिंगतोभद्रं पूजयेत्सर्वदेवताः ॥ १ ॥ वितानं तत्र बध्नीयात्पंचवर्णं सुशोभनम् । आचार्यं वरयित्वा च गौर्या रुद्रस्य संयुताम् ॥ २ ॥ सुवर्णप्रतिमां तत्र वृषभं रजतस्य च ॥ कलशे पूजयित्वा च रात्रौ जागरणं चरेत् ॥ ३ ॥ प्रभाते च पुनः पूज्य अग्निस्थापनमाचरेत् । हुनेदष्टशतं चैव तिलद्रव्यं घृतप्लुतम् ॥ ४ ॥ त्र्यंबकेण च मन्त्रेण गौर्याश्चैव पृथक्पृथक् ॥ वर्षांते भोजयेद्विप्राञ्छिवभक्तिसमन्वितान् ॥ ५ ॥ पायसं घृतसंयुक्तं मधुना

च परिप्लुतम् ॥ शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् ॥ ६ ॥ देवाय चापि दध्यन्नं
वितानं ध्वजचामरम् । कृष्णां पयस्विनीं गां च सघंटां वाससा युताम् ॥ ७ ॥ सरत्नदोहकलशी
मलंकृत्य च नारद ॥ अलंकारं च वस्त्रं च दक्षिणां च स्वशक्तितः ॥ ८ ॥ भक्त्या प्रणम्य विधिवदाचा
र्याय निवेदयेत् ॥ करोत्येवं व्रतं पुण्यं वर्षमेकं निरंतम् ॥ ९ ॥ महापातकनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥
कल्पकोटिशतं साग्रं शिवलोके महीयते ॥ १० ॥ इति आदित्यपुराणोक्तकृष्णाष्टमीव्रतोद्याप
नम् ॥ इति गौडपंडितश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे अष्टमीव्रतोद्यापनानि ॥
अथ नवमीव्रतोद्यापनानि लिख्यंते ॥ तत्र तावत् चैत्रशुक्लनवम्यां रामनवमीव्रतम् । तच्च पर
विद्धायां मध्याह्नव्यापिन्यां कार्यम् ॥ अथ रामनवमीव्रतोद्यापनप्रयोगः ॥ नवम्यां प्रात
र्नित्यकृत्य विधाय दंतधावनपूर्वकं नद्यादौ स्नात्वा संध्यादिनित्यकर्म कृत्वा स्वासने प्राङ्मुख
उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममात्मनः अखिलपापक्षयपूर्वकचतुर्विधपुरु
षार्थसिद्धिद्वारा आचरितस्य रामनवमीव्रतस्य सांगतासिद्धये तदुद्यापनं करिष्ये । इति संक
ल्प्य । तदंगत्वेन गणेशपूजनादि आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः आचार्यः सर्वतोभद्र

व्र०
॥८०॥

मध्यस्थताम्रकलशे साक्षात्पूर्णपात्रे षट्कोणं पद्मं विरच्य तत्र मध्ये हैमं रामम् ॐ रामाय नमः इति षडक्षरेण मन्त्रेण संस्थाप्य तद्वामतः हैमीं सीताम् ॐ जनकात्मजायै नमः । इति मंत्रेण च प्रतिष्ठाप्य परितः पूर्वादिक्रमेण । ॐ दशरथाय नमः इति दशरथम् १ कौसल्यायै नमःइति कौसल्यां २ लक्ष्मणाय० ३ भरताय० ४ शत्रुघ्नाय० ५ मारुतये नमः ६ इति एभमंत्रः प्रतिष्ठाप्य पुरुषसूक्तेन पूजयेत् ( पुष्पपूजांते ) अंगपूजा कार्या । श्रीरामचन्द्रायः नमः पादौ पूजयामि १ राजीवलोचनाय० गुल्फौ पू० २ रावणांतकाय० जानुनी पू० ३ वाचस्पतये० पू० ४ विश्वरूपाय० जंघे पू० ५ लक्ष्मणाग्रजाय० कटी पू० ६ विश्वमूर्त्तये० मेढं पू० ७ विश्वामित्रप्रियाय० नाभिं पू० ८ परमात्मने० हृदयं पू० ९ श्रीकंठाय० कंठं पू० १० सर्वास्त्रधारिणे० बाहू पू० ११ रघूद्वहाय० मुखं पू० १२ पद्मनाभाय०० जिह्वां पू० १३ दामोदराय० दंतान् पू० १४ सीतापतये० ललाटं पू० १५ ज्ञानगम्याय० शिरः पूजयामि १६ सर्वात्मने नमः सर्वांगं पूजयामि १७ इति संपूज्य नमस्कारं कुर्यात् । नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे ॥ चिन्मयानंदरूपाय सीतायाः पतये नमः ॥ १ ॥ अथार्घ्यदानम् ॥ दशाननवधार्थाय धर्मसंस्थापनाय च ॥ राक्षसानां

विनाशाय दैत्यानां निधनाय च ॥ २ ॥ परित्राणाय साधूनां जातो रामःस्वयं हरिः ॥ गृहाणार्घ्यं
मया दत्तं मात्रादिसहितोनघ ॥ ३ ॥ इति । ततःपुराणपठनादिना रात्रौजागरणं कृत्वा प्रातरग्निं प्रति
ष्ठाप्य आज्यभागांते प्रधानदेवरामाय ॐ रां रामाय नमः स्वाहा इति मंत्रेण पायसाज्यादिद्रव्येण
अष्टोत्तरशतं हुत्वा ॐ जनकात्मजायै स्वाहा २८ दशरथाय० २८ कौसल्यायै० २८ लक्ष्मणाय० २८
भरताय० २८ शत्रुघ्नाय० २८ मारुतये स्वाहा २८ इति मंत्रेण प्रत्येकं पूर्वोक्तद्रव्यैरेवाऽष्टाविंशतिसं
ख्याकाहुतिभिश्च पुरुसूक्तेन प्रत्यृचमाज्यहोमं च कुर्यात् । ततो मंडलदेवताभ्यश्चैकैकाज्याहुतिं दत्त्वा
होमशेषं समाप्य आचार्यं संपूज्य सोपस्करां प्रतिमां दद्यात् । तत्र मंत्रः । इमां स्वर्णमयीं रामप्रतिमां
समलंकृताम् ॥ श्रीरामप्रीतये दास्ये प्रीतो भवतु राघवः ॥ १ ॥ ततो व्रतपूर्त्त्यै सवत्सां गां सोपस्करां
शय्यां च दत्त्वा सदन्नेन ब्राह्मणान्संभोज्य दक्षिणाभिः प्रतोष्य आशिषो गृहीत्वा बंधुभिः सह
भुंजीत ॥ इति स्कंदपुराणोक्तश्रीरामनवमीव्रतोद्यापनप्रयोगः । अथ रामनामलेखनोद्यापनप्र
योगः ॥ ( भविष्ये ) ( उमां प्रति महादेववाक्यम् ) रामनाम लिखेद्यस्तु लक्षकोटिशतावधि ॥ एकैक
मक्षरं पुंसां महापातकनाशनम् ॥ १ ॥ प्राप्नोति परमां सिद्धिं दीर्घायुः पुत्रसंपदमिति ॥ आचम्य

प्राणानायम्य । देशकालौ संकीर्त्य । ममात्मनः सर्वविधपातकक्षयपूर्वकसकलमनोरथाऽवाप्तिद्वारा श्रीरामचन्द्रप्रीत्यर्थं मया लिखितं यत्कोटिलक्षायुताऽमुकावधि रामनाम तत्संपूर्णतासिद्ध्यै तदु द्यापनाख्यं कर्म करिष्ये । इति संकल्प्य पूर्ववदाचार्यवरणांतं कर्म कुर्यात् । ततः आचार्यो द्रोण चतुष्टयतंडुलपुंजे सर्वतोभद्रस्थताम्रकलशे साक्षतपूर्णपात्रोपरि पलप्रमाणराजतसिंहासने सुवर्णस्य पलेन तदर्द्धेन वा शक्त्या निर्मितां श्रीरामप्रतिमां तद्वामे तद्वत् सौवर्णीं सीतां दक्षिणतः लक्ष्मणं पुरतो हनुमंतं च चतुर्थांशेन सौवर्णं संस्थाप्य । ॐ रां रामाय नमः १ श्रीसीतायै नमः २ श्रीलक्ष्मणाय नमः ३ श्रीहनुमते नमः ४ इति नाममंत्रेण प्रत्येकमावाह्य पुरुषसूक्तेन षोडशोपचारैः राजोपचारैर्वा संपूजयेत् । ततः परितः सप्तधान्योपरि वारिपूर्णानष्टौ कलशान् पूर्वादिक्रमेण यथाविधिना संस्थाप्य तेषु इंद्रादिलोकपालानावाह्य तत्तन्नाममंत्रेण पूजयेत् । तद्यथा । ॐ इंद्राय नमः १ अग्नये नमः २ यमाय० ३ निर्ऋतये० ४ वरुणाय० ६ कुबेराय० ७ ईशानाय नमः ८ ततो रात्रौ जागरणं कृत्वा प्रातः स्नात्वा नित्यकर्म कृत्वा स्वशाखोक्तविधिना अग्निं प्रतिष्ठाप्य आज्यभागांतेग्रह होमं विधाय ( बहुकर्तृकहोमपक्षे ) लेखनदशांशेन (एककर्तृकहोमपक्षे तु ) शतांशेनवाॐरामाय स्वाहा इति

मंत्रेण समिदाज्यचरुतिलद्रव्यैर्हुत्वा पुरुषसूक्तेन प्रत्यृचं पूर्वोक्तद्रव्यैरेकैकाहुतिंहुत्वा परिवारदेवताभ्यश्च प्रत्येकमष्टोत्तरसहस्रमष्टशतं वा जुहुयात् । ततः सर्वतोभद्रमंडलदेवताभ्यश्च एकैकयाज्याहुत्या हुत्वा होमशेषं समाप्य आचार्यं सुवर्णभूषणवस्त्रधेनुभिः संपूज्य प्रतिमादानं कुर्यात् । तत्र मंत्राः । नतोस्मि देवदेवेश बहुबुद्धिमहात्मभिः ॥ यश्चिंत्यते कर्मपाशाद्धृदि नित्यं मुमुक्षुभिः ॥ १ ॥ मायया गुणमय्या त्वं सृजस्यवसि लुंपसि ॥ अतस्त्वत्पादभक्तेषु त्वद्भक्तिस्तु श्रियोधिका ॥ २ ॥ भक्तिमेव हि वांछंति त्वद्भक्ताः सारवेदिनः ॥ अतस्त्वत्पादकमले भक्तिरेव सदास्तु मे ॥ ३ ॥ संसारामयतप्तानां भैषज्यं भक्तिरेव ते ॥ सीतासौमित्रिहनुमद्भक्तियुक्तो नरेश्वरः ॥ ४ ॥ दानेनानेन मे राम भक्तिमुक्तिप्रदो भव ॥ इति ॥ ततःप्रतिमादानप्रतिष्ठासिद्ध्यर्थं सुवर्णं दत्त्वा ऋत्विग्भ्यो दक्षिणां दद्यात् । ततो घृतपात्रं तिलपात्रं सोपस्करां शय्यां च दत्त्वा दश दानानि ( शक्तौ सत्यां रथदानं ) दद्यात् । अशक्तश्चेत्स्वर्ण दानमेव कृत्वा रामं प्रणमेत् । ततो द्विजेभ्य आशिषं गृहीत्वा उमामहेश्वरौ संपूज्य बटुकमेकं कुमारीणां शतं योगिराजं च संभोज्य पक्वान्नपायसलड्डुकादिभिः सहस्रं शतं वा ब्राह्मणान् भोजयेत् । तत इष्टजनैः सह भुंजीत ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ एकेन रामनाम्ना तु तत्फलं लभते

नरः ॥ १ ॥ इति भविष्यपुराणोक्तरामनामलेखनोद्यापनप्रयोगः समाप्तः ॥ अथ अदुःखनवमी व्रतम् ॥ तच्च भाद्रपदशुक्लनवम्यां मुहूर्तमात्रसत्त्वेपि परयुतायां कार्यम् । देशकालौ संकीर्त्य मम इह जन्मनि जन्मांतरे च भर्त्रा सह चिरायुःसौभाग्यप्राप्तये सकलपातकदुःखनाशार्थं व्रतकल्पोक्त फलप्राप्त्यर्थं श्रीगौरीदेवताप्रीत्यर्थं च अदुःखनमीव्रतं तदंगत्वेन गौरीपूजनं च करिष्ये । इति संकल्प्य गणपतिपूजनं कुर्यात् । ततो गोमयेनोपलिप्तभूमौ वेदिकां गुडलिप्तामिक्षुच्छादितामपूप पायसान्वितामुपरि मंडपिकायुतां कृत्वा तत्र पीठे आसनादिकलशप्रतिष्ठांतं कृत्वा अग्न्युत्तारणपू र्वकं गौरीप्रतिमां संस्थाप्य ॐ गौर्य्यै नमः इति मंत्रेण षोडशोपचारैः संपूज्य परितो दिक्पालान् संपूजयेत् । तद्दिने हिंसादिरहितमुपवासः कार्यः । अशक्तश्चेद्दुग्धं फलं वा भक्षयेत् । ततो रात्रौ नृत्य गीतादिभिर्जागरणं कृत्वा प्रातः पुनर्देवीं संपूज्य सपत्नीकं ब्राह्मणं संपूज्य पंचनारिकेलादिफला न्वितं वायनं सोपस्करं दद्यात् । तत्र मंत्रः । गौर्य्यो दुःखविनाशिन्य व्रतसंपूर्णहेतवे ॥ वायनं द्विजवर्याय सहिण्यं ददाम्यहम् ॥ १ ॥ ततो देवीं विसृज्य प्रतिमां सोपस्करामाचार्याय दत्त्वा यथाशक्ति सप'नीकान् भोजयित्वा बंधुभिः सह स्वयं भोजनं कुर्यात् । एतद्व्रतं नववर्षं

कार्यम् । इति स्कंदपुराणोक्तमदुःखनवमीव्रतोद्यापनम् ॥ इति गौडपंडितश्रीचतुर्थीलालकृते व्रतोद्यापनप्रकाशे नवमीव्रतोद्यापनानि ॥ ॥ अथ दशमीव्रतोद्यापनानि लिख्यंते ॥ तत्र तावत् आशादशमीव्रतोद्यापनम् । तच्च शुभमासस्य यस्यांकस्यांचिच्छुक्लदशम्यां कार्यम् । ( भविष्योत्तरे ) देशकालौ संकीर्त्य मम अखिलमनोरथावाप्तिपूर्वकदशाशास्वरूपिपरमेश्वरप्रीत्यर्थमाशदशमीव्रतं तदुद्यापनं च करिष्ये । इति संकल्प्य । नक्तसमये गोमयोपलितगृहांगणे यवैः पिष्टातकेन वा स्त्रीरूपा दशाशापुत्तलिकाः विलिख्य तत्तदिंद्रादिदशदिक्पालानामायुधवाहनैश्चिह्निताः कृत्वा तत्तन्मंत्रैर्नाममंत्रैर्वा संपूज्य घृताक्तं नैवेद्यं भक्ष्यभोज्यादियुतं दीपांश्च पृथक्पृथग्दापयित्वा कालोद्भवानि फलानि च समर्प्य प्रार्थयेत् । आशास्त्वाशाः सदा संतु सिद्ध्यंतां मे मनोरथाः ॥ भवतीनां प्रसादेन सदा कल्याणमस्त्विति ॥ १ ॥ ततो विप्रं संपूज्य दक्षिणां दत्त्वा ब्राह्मणान्संभोज्य स्वयं भुंजीत । अनेन क्रमेण मासि समाचरेत् । ततो वर्षांते उद्यापनं कुर्यात् । तत्रादौ पूर्ववत्संकल्पं कृत्वा गणेशपूजनाद्याचार्यवरणांतं कर्म कृत्वा सर्वतोभद्रमंडले ब्रह्मादिदेवान्संपूज्य मध्ये अक्षतपुंजेषु दश सौवर्णीः रौप्या वा आशाप्रतिमाः

संस्थाप्य वक्ष्यमाणदशभिर्मंत्रैः प्रपूज्य प्रार्थयेत् । तत्र मंत्राः । त्वयि सन्निहितः शक्रः सुरासुरनम
स्कृतः । पूज्या त्वं भुवनस्यास्य ऐंद्रि दिग्देवते नमः ॥ १ ॥ अग्नेः परिग्रहावासे त्वमाग्नेयीति पठ्यसे ।
तेजोरूपा पराशक्तिराग्नेयि वरदा भव ॥ २ ॥ धर्मराजं समाश्रित्य लोकान्संमयस्यमून् । तेन संय
मनी चासि याम्यै सत्कामदा भव ॥ ३ ॥ खड्गहस्तोतिविकृतो निर्ऋतिस्त्वामुपाश्रितः । तेन निर्ऋ
तिनामासि त्वमाशां पूरयस्व मे ॥ ४ ॥ त्वय्यास्ते भुवनाधारो वरुणो यादसांपतिः । कामार्थं मम
धर्मार्थं वारुणि प्रवणा भव ॥ ५ ॥ अधिष्ठितासि यस्मात्त्वं वायुना जगदायुना । वायवि त्वमतः
शांतिं नित्यं यच्छ ममालये ॥ ६ ॥ धनदेनाधिष्ठितासि प्रख्याता त्वमिहोत्तरा । निरुत्तरा भव!
स्माकं दत्त्वा सद्यो मनोरथान् ॥ ७ ॥ ऐशानि जगदीशेन शंभुना त्वमलंकृता । पूरयस्वाशु मे देवि
वांछितानि नमोनमः ॥ ८ ॥ भुजंगाष्टकुलेन त्वं सेवितासि यतो ह्यधः । नागांगनाभिः सहिता
हिता भव ममाय वै ॥ ९ ॥ सर्वलोकपरित्राता सर्वदा त्वं शिवाय च । सनकाद्यैः परिवृता त्राहि मां
पाहि सर्वदा ॥ १० ॥ नक्षत्राणि च सर्वाणि ग्रहास्तारागणास्तथा । नक्षत्रमातरो याश्च भूतप्रेतविना
यकाः । सर्वे ममेष्टसिद्ध्यर्थं भवंतु प्रवणाः सदा ॥ ११ ॥ एभिर्मंत्रैः संपूज्य ततः गीतवादित्रादि

मंगलैः पतिपुत्रवतीस्त्रीभिः जाग्रतीभिः सह पुराणपठनादिना रात्रौ जागरणं कुर्यात् । ततः प्रातः
स्नात्वा पूर्ववत्संपूज्य दश मिथुनानि वस्त्रादिना संपूज्य ( अभावे एकं वा संपूज्य ) तेभ्यः सौभा
ग्यद्रव्ययुतं वायनं दक्षिणायुतं दत्त्वा आचार्याय सोपस्करं पीठं व्रतसंपूर्तये धेनुं च दत्त्वा भक्ष्यभो
ज्यादिना दशब्राह्मणान्संभोज्य दक्षिणादिना प्रतोष्य आशिषो गृहीत्वा सुहन्मित्रादियुतो भुंजीत ।
य एवं कुरुते पार्थ दशमीव्रतमादरात् । सर्वान्कामानवाप्नोति मनसोऽभीप्सितान्नरः ॥ १ ॥ इत्याशा
दशमीव्रतोद्यापनं समाप्तम् ॥ अथ भाद्रपदशुक्लदशम्यां दशावतारव्रतं तदुद्यापनं च ( भविष्ये ) तच्च
दशवर्षपर्यंतं कार्यम् । दशम्यां प्रातर्नद्यादौ स्नात्वा संध्यातर्पणादिनित्यकर्म निर्वर्त्य गृहमागत्य
संकल्पं कुर्यात् । देशकालौ संकीर्त्य मम दशावरान्दशपरान्पुरुषानात्मानं चोद्धर्तुकामस्तथा श्वेतद्वी
पवासपूर्वकनिरतिशयानंदसुखावाप्तये च दशावतारस्वरूपिपरमेश्वरप्रीत्यर्थं दशावतारव्रतं करिष्ये ।
इति संकल्प्य । गणेशपूजनपुण्याहवाचनादिकर्म कुर्यात् ॥ ततो नद्यादितीरे स्वगृहे वा शुद्धगोम
योपलिप्तभूमौ चंदनादिना मत्स्यादिदशाऽवतार प्रतिमा विलिख्य । ॐ इदंविष्णुर्विचक्रमे० १
इति मंत्रेण प्रतिष्ठाप्य पुरुषसूक्तेन षोडशोपचारैः पूजयेत् ( शूद्रादयस्तु तत्तन्नाममंत्रैः पूजयेयुः )

नैवेद्यादौ विशेषः । गोधूमादिधान्यचूर्णस्य स्वहस्तप्रसृतित्रयं गृहीत्वा तस्य त्रिंशत्पदार्था घृतपाचिताः वक्ष्यमाणसंज्ञिता कर्तव्याः । तत्र दश देवाय दश ब्राह्मणाय दश आत्मने च दद्यात् । वर्षे वर्षे भिन्ननामकाः । तद्यथा । प्रथमे पूरिकाः । द्वितीये अपूपाः तृतीये अपूपकसाराः । चतुर्थे मोदकाः । पंचमे सोहालिकाः । षष्ठे खण्डवेष्टकाः । सप्तमे कोकरसाः अष्टमे अर्कपुष्पनिभाः । नवमे कर्णवेष्टकाः । दशमे मंडकाः । एवं प्रतिवर्षं नैवेद्यं निवेद्य संपूज्य नमस्कुर्यात् । तत्र मंत्राः । मत्स्यं कूर्म्मं वराहं च नरसिंहं त्रिविक्रमम् । रामं रामं च कृष्णं च बौद्धं चैव सकल्किनम् ॥१॥ गतोस्मि शरणं देवं हरिं नारायणं प्रभुम् । प्रणतोस्मि जगन्नाथं समे विष्णुः प्रसीदतु ॥२॥ छिनत्ति वैष्णवीं मायां भक्त्या प्रीतो जनार्दनः । श्वेतद्वीपं नयत्वस्मान्मयात्मा सन्निवेदितः ॥ ३ ॥ ततो ब्राह्मणं संपूज्य दक्षिणासहितमुक्तपदार्थदशकं दत्त्वा तावन्मितं स्वयं मौनी भुंजीत । एवं दशवर्षं प्रतिभाद्रपदशुक्लदशम्यां कृत्वा अंत्ये उद्यापनं कुर्यात् । तद्यथा । पूर्ववत् संकल्पं कृत्वा मयाचरितदशावतारव्रतस्य उद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनादि आचार्यवरणांतं कर्म कुर्यात् । अत्र शुचीन् मंत्रविदो दश द्विजान् अभावे गुणवंतमेकं वा वृत्वा मधुपर्कादिना पूजयेत् । ततस्ते द्विजाः सर्वतोभद्रे

पूर्वोक्तविधिना ब्रह्मादिदेवतास्थापनपूर्वकं ताम्रकलशप्रतिष्ठांतं कृत्वा तदुपरि हैमीर्दश प्रतिमाः मत्स्यादिदशावतारस्वरूपाः प्रतिष्ठाप्य । ॐ इदंविष्णुर्विचक्रमे० ॥ १ ॥ इति मंत्रेण तत्तन्नाम मंत्रेण वा आवाह्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य पुराणस्तोत्रैः स्तुत्वा प्रणमेयुः । ततः पूर्वनि मंत्रितान् द्विजान्वस्त्रादिना संपूज्य क्रमेण ताः प्रतिमास्तेभ्यः दक्षिणापुरःसरं दत्त्वा यथाशक्ति ब्राह्मणान्संभोज्य आशिषो गृहीत्वा स्वयं भुंजीत । इति भविष्योक्तदशावतारव्रतोद्यापनविधानं समाप्तम् ॥ आश्विनशुक्लदशम्यां विजयादशमीव्रतम् । तदुद्यापनं तु प्रमाणाऽभावान्न लिखितम् । व्रतवि धानं तु व्रतराजादिषु द्रष्टव्यम् । एवमेव यदा यस्मिन्कस्मिन्मासे शुक्लपक्षे रविवारयुता दशमी तदा दशादित्यव्रतं कार्यम् । तद्विधानमपि तत्रैव ज्ञातव्यम् । ज्येष्ठशुक्लदशहराव्रतं कार्यम् । तत्रैव दशविधपापक्षयकामो गंगास्नानं तत्पूजनं च कुर्यात् ॥ इगि पंडितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे दशमीव्रतोद्यापनानि ॥ १० ॥ अथ एकादशीव्रतोद्यापनम् ॥ तच्च प्रबोधिन्यां मार्गशीर्षे भीमतिथौ माघे वैशाखे वा वित्तसमृद्धौ शुभतिथौ वा कार्यम् । तत्र प्रयोगः । दशम्यां दंतधावन पूर्वकं स्नात्वा हविष्यान्नमेकवारं भुक्त्वा एकादश्यां प्रातर्नदीतडागकूपादौ यथाविधि स्नात्वा संध्या

तर्पणादि नित्यकर्म समाप्य गोमयादिलिप्तदेशे स्वासने प्राङ्मुख उपविश्य दर्भपवित्रधारणं कृत्वा। आचम्य। प्राणानायम्य ताम्रपात्रे जलतिलपुष्पचंदनकुशानादाय संकल्पं कुर्यात्। तद्यथा। देश कालौ संकीर्त्य। मम इह जन्मनि जन्मांतरे च कृतकायिकवाचिकमानसिकसांसर्गिकसमस्तपापक्षय पूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं मया आचरितं शुक्लकृष्णैका दशीव्रतं तस्य सांगतासिद्ध्यर्थं तत्संपूर्णफलावाप्तये देशकालाद्यनुसारतो यथाज्ञानेन शुक्लकृष्णै कादशीव्रतोद्यापनं करिष्ये। तदंगत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्या दिवरणं च करिष्ये। इति संकल्प्य। पूर्ववत्सर्वं कुर्यात्। ( केचित् रात्रौ पूजनत्वान्मातृकापू जनं नांदीश्राद्धं च नेच्छंति ) ततः पूर्वोक्तप्रकारेण सर्वतोभद्रमण्डले ब्रह्मादिदेवानावाह्य संपूज्य तन्मध्ये अक्षतपुंजे ताम्रकलशं राजतपूर्णपात्रसहितं यथाविधिना प्रतिष्ठाप्य तदुपरि पट्टवस्त्रं प्रसार्य्य कुंकुमादिना अष्टदलं लिखित्वा तन्मध्ये सौवर्णी लक्ष्मीनारायणप्रतिमां स्थापयेत्। अथावाहनम्॥ नमो विष्णवे तुभ्यं भगवन्परमात्मने। कृष्णोसि देवकीपुत्र परमेश्वर उत्तम। अजोनादिश्च विश्वात्मा सर्वलोकपितामहः ॥ १ ॥ क्षेत्रज्ञः शाश्वतो विष्णुः श्रीमान्नारायणः परः।

त्वमेव पुरुषः सत्योऽतींद्रियोसि जगत्पते ॥ २ ॥ यत्ते तेजः परं सूक्ष्मं तेनेमां वेदिकां विश। ॐ भूः पुरुषमावाहयामि। ॐ भुवः पुरुषमावाहयामि । ॐ स्वः पुरुषमावाहयामि । ॐ भूर्भुवःस्वः पुरुष मावाहयामि। विष्णो इहागच्छ इह तिष्ठ पूजां गृहाण सुप्रसन्नो वरदो भव । इत्यावाह्य । परितो वक्ष्यमाणदेवताः पूर्वादिक्रमेणावाहयेत् । तद्यथा । ॐ अग्नये नमः अग्निमावाहयामि १ इंद्राय० इन्द्रमावा० २ प्रजापतये० प्रजापति ०० ३ विश्वेभ्यो देवेभ्यो० विश्वान्देवान्०४ ब्रह्मणे० ब्राह्मण०५ वसु देवाय० वसुदेव० ६ श्रीरामाय० श्रीराम० ७ श्रियै नमः श्रियमावाहयामि ८ इत्यावाहयेत् । पुनः पूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु । ॐ स्त्रीचतुःसहस्रसहितां रुक्मिणीमावाहयामि १ स्त्रीचतुःसहस्रसहितां सत्यभामामावाहयामि २ स्त्रीचतुःसहस्रसहितां जांबवतीमावाहयामि ३ स्त्रीचतुःसहस्रसहितां मित्रविंदामावाहयामि ४ इत्यावाहयेत् । ततः आग्नेयादिकोणदलेषु क्रमेण। ॐ शंखमावाहयामि ५ चक्रमावा० ६ गदामावा० ७ पद्ममावाहयामि ८ इत्यावाह्य तद्बहिः पूर्वाद्यष्टपत्रेषु क्रमेण। ॐ विमलामावाहयामि १ उत्कर्षिणीमावाहयामि २ ज्ञानामावा० ३ क्रियामावा० ४ योगामावा० ५ प्रह्वामावा० ६ सत्यामावा० ७ ईशानामावा० ८ ( मध्ये ) अनुग्रहामावाहयामि ९

व्र०
॥८६॥

इत्यावाहयेत् ॥ ततो देवस्याग्रे । ॐ सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्य मतः शांतिं प्रयच्छ मे ॥ ॐ गरुडमावाहयामि । इति गरुडमावाह्य भूपुरे परितः पूर्वादिक्रमेण इन्द्रादिलोकपालानावाहयेत् । ततः पूर्वादिक्रमेण केशवादीनावाहयेत् । ॐ केशवाय नमः केशवमावाहयामि १ नारायणाय० नारायण० २ ( एवं सर्वत्र ) माधवाय० ३ गोविंदाय० ४ विष्णवे० ५ मधुसूदनाय० ६ त्रिविक्रमाय० ७ वामनाय० ८ श्रीधराय० ९ हृषीकेशाय० १० पद्मनाभाय० ११ दामोदराय० १२ पुनः पूर्वादिक्रमेण । ॐ संकर्षणाय० १ वासुदेवाय० २ प्रद्युम्नाय० ३ अनिरुद्धाय० ४ पुरुषोत्तमाय० ५ अधोक्षजाय० ६ नारसिंहाय० ७ अच्युताय० ८ जनार्दनाय० ९ उपेंद्राय० १० हरये० ११ श्रीकृष्णाय नमः श्रीकृष्णमावाहयामि १२ इत्येवंप्रकारेणावाह्य । ॐ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् । अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादना १ मनोजूति० २ इति मंत्राभ्यां प्रतिष्ठाप्य । पुरुषसूक्तेन ॐ रुक्मिण्याद्यावाहितदेवतासहिताय महाविष्णवे नमः । इति षोडशोपचारैः पूजयेत् ( पुष्पपूजानंतरमंगपूजां कुर्यात् ) तद्यथा । ॐ दामोदराय नमः पादौ पूजयामि १ माधवाय० जानुनी० २ कामपतये० गुह्यं० ३ वामनमूर्त्तये०

कटी० ४ पद्मनाभाय० नाभिं० ५ विश्वमूर्तये० उदरं० ६ ज्ञानगम्याय० हृदयं० ७ श्रीकंठसंगिने०
कंठं० ८ सहस्रबाहवे० बाहू० ९ योगयोगिने० चक्षुषी० १० उरुगाय० ललाटं० ११ नाकसुरेश्व
राय० नासां० १२ श्रवणेशाय० श्रवणौ० १३ सर्वकामदाय० शिखां० १४ सहस्रशीर्षाय०
शिरः० १५ सर्वरूपिणे नमः सर्वांगं पूजयामि १६ ( नैवेद्यदाने विशेषः ) गोदकान्गुडकांश्चूर्णा
न्घृतपूरकमंडकान । सोहालिकादिकं सारसेवाः सक्तव एव च ॥ १ ॥ वटकान् पायसं दुग्धं शालि
दध्योदनं तथा । इंडरीकान्पूरिकाश्च अपूपान्गुडमोदकान् ॥ २ ॥ तिलपिष्टं कर्णवेष्टं शालिपिष्टं
सशर्करम् । रंभाफलं च सघृतं मुद्गचूर्णं गुडौदनम् ॥ ३ ॥ एवं क्रमेण नैवेद्यं पृथग्वा चरमेऽहनि ।
दद्यात् इति शेषः ) ततो नानास्तोत्रैर्नमस्कारं कृत्वा विशेषार्घ्यं दद्यात् । ताम्रपात्रे जलं नारि
केलं बीजपूरमक्षतान्पुष्पाणि तुलसीपत्राणि दूर्वां चंदनं पूगीफलं हिरण्यादीनि च निक्षिप्य जानु
भ्यां धरणीं गत्वा इमं मंत्रमुदीरयेत् । ॐ नारायण जगन्नाथ लक्ष्मीकांत दयानिधे । गृहाणार्घ्यं
मया दत्तं व्रतसंपूर्तिहेतवे ॥ १ ॥ ततो ब्राह्मणान् संपूज्य गीतवादित्रशास्त्रपुराणकथाश्रवणादिना
जागरपूर्वकं रात्रिं निनयेत् ( अत्र जागरणे कृते महापुण्यं महापापनाशनं च भवति ) ततः प्रभाते

आचार्यो यजमानश्च स्नात्वा संध्यादिनित्यकर्म कृत्वा मंडलदेवताः पंचोपचारैः संपूज्य होमं कुर्यात् । तद्यथा । होमसंख्यानुसारेण स्थंडिलं चतुरस्रं चतुरंगुलोच्छ्रितं सन्मृदा कृत्वा । देशकालौ संकीर्त्य । शुक्लकृष्णैकादशीव्रतोद्यापनांगभूतं विहितहवनं करिष्ये इति संकल्प्य स्वगृह्योक्तप्रकारेण अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते ( ग्रहहोमपक्षे ) सूर्यादिग्रहहोमं विधाय प्रधानदेवताहोमं कुर्यात् । तद्यथा । आज्येन नारायणाय पुरुषसूक्तेन प्रत्यृचं हुत्वा । पुनः ॐ अग्नये स्वाहा इदमग्नये १ इंद्राय० इदं० २ प्रजापतये०इदं०३विश्वेभ्यो देवेभ्यः ४ ब्रह्मणे० ५ इत्याज्यहोमं प्रत्येकमेकवारं कृत्वा ततो घृताक्तपायसेन ॐ वासुदेवाय० इदं० १ बलदेवाय० इदं० २ श्रियै० इदं ० ३ विष्णवे०इदं०४अग्नये०५वायवे०६सूर्याय०७प्रजापतये०८ इति हुत्वा । पायसेन एव ॐ केशवाय स्वाहा १ नारायणाय० २ माधवाय०३गोविंदाय०४विष्णवे० ५ मधुसूदनाय० ६ त्रिविक्रमाय० ७ वामनाय० ८ श्रीधराय०९हृषीकेशाय० १० पद्मनाभाय० ११ दामोदराय० १२ इति द्वादशदेवताभ्यः । ॐ संकर्षणाय० १ वासुदेवाय० २ प्रद्युम्नाय० ३ अनिरुद्धाय० ४ पुरुषोत्तमाय० ५ अधोक्षजाय० ६ नारसिंहाय० ७ अच्युताय० ८ जनार्दनाय० ९

उपेंद्राय० १० हरये० ११ श्रीकृष्णाय स्वाहा १२ इति च जुहुयात् । ततः पायसेनैव । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳪंसुरेस्वाहा १०८ इति मंत्रेणाष्टोत्तरशतं जुहुयात् । ततः केवलाज्येन ॐ स्त्रीचतुःसहस्रहितायै रुक्मिण्यै स्वाहा १ स्त्रीचतुःसहस्रसहितायै सत्यभामायै० २ स्त्रीचतुःसहस्रसहितायै जांबवत्यै० ३ स्त्रीचतुःसहस्रसहितायै कालिंद्यै स्वाहा ४ शंखाय स्वाहा ५ चक्राय० ६ गदायै० ७ पद्माय० ८ गरुडाय० ९ । इंद्राय० १ अग्नये० २ यमाय० ३ निर्ऋतये० ४ वरुणाय० ५ वायवे० ६ कुबेराय० ७ ईशानाय० ८ । विमलायै० १ उत्कर्षिण्यै० २ ज्ञानायै० ३ क्रियायै० ४ योगायै० ५ प्रह्वायै० ६ सत्यायै०७ईशानायै स्वाहा ८ इति अष्टदलदेवताभ्यो होमं कृत्वा ब्रह्मादिसर्वतोभद्रमंडलदेवताभ्यो घृतहोमं कुर्यात् । ततः स्विष्टकृदादि होमशेषं समाप्य देवाय होमशेषपायसं प्रापणार्थं निवेद्य प्रार्थनां कुर्यात् । ॐ त्वामेकमाद्यं पुरुषं पुराणं नारायणं विश्वसृजं यजामः । मयैकभागो विहितो विधेयो गृहाण हव्यं जगतामधीश ॥ १ ॥ इति प्रापणं निवेद्योपतिष्ठेत् । ततः अग्निं वेदिं च चतुर्वारं प्रदक्षिणीकृत्य । ॐ भिंधिविश्वा अप द्विषः परिबाधोजहीमृधः । वसुस्पार्हंतदाभर ॥ इति मंत्रेण धरण्यां जानुनी निपात्य ध्रुवसूक्तं पुरुषसूक्तं

च जस्वा अष्टौ पदानि प्रतिदिशं गच्छेत् ( एभिर्मंत्रैः ) कृष्णाय वासुदेवाय हरये परमात्मने । शरण्या याप्रमेयाय गोविंदाय नमोनमः ॥ १ ॥ नमः स्थूलाय सूक्ष्माय व्यापकायाव्ययाय च अनंताय जगद्धात्रे ब्रह्मणेऽनंतमूर्तये ॥ २ ॥ अव्यक्तायाखिलेशाय चिद्रूपाय गुणात्मने । नमो मूर्त्ताय सिद्धाय पराय परमात्मने ॥ ३ ॥ देवदेवाय वंद्याय पराय परमेष्ठिने । कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः ॥४॥ ततो देवाय निवेदितं प्रापणं गृहीत्वा मूर्ध्नि कृत्वा घोषयेत् । के वैष्णवाः । के वैष्णवा । के वैष्णवाः । इत्युच्चैर्वदेत् । ततः समानाः वयं वैष्णवाः । वयं वैष्णवा । वयं वैष्णवाः । इति प्रवदेयुः । ततस्तेभ्यः समानेभ्यो हविर्दत्त्वा स्वयं ॐ नमो भगवते वासुदेवाय । इदममृतमहं प्राश्नामीति प्राश्य आचम्य । आचार्यः सिद्धये स्वाहा इत्यग्नौ आज्यं जुहुयात् । ततः ॐ यतऽइंद्रभयामहेततोनोऽअभयंकृधि । मघवञ्छग्धितवतन्नऽऊतिभिर्विद्विषोविमृधोजहि ॥ इति मंत्रेणात्मानमभिमंत्र्य प्रायश्चित्तहोमशेषं समापयेत् । तत उत्तरपूजां कृत्वा व्रतसमाप्त्यर्थं सवत्सां सोपस्करां सुशीलां सालंकारां दुग्धवतीं कृष्णां वा श्वेतां गामाचार्याय विधिवद्दद्यात् ( तद्विधिस्तु प्रथमप्रकरणे पूर्वमुक्तः ) ततः सोपस्करां सालंकारां लक्ष्मीनारायणप्रतिमायुतां शय्यां च दत्त्वा चतुर्विंशतिब्राह्मणान् पूर्वोक्तकेशवादिनामभिः संपूज्य

तेभ्यः पक्वान्नपूरितान्वस्त्रतांबूलयज्ञोपवीतफलदक्षिणायुतान् केशवादिनामांकितान् चतुर्विंशतिकलशान् दद्यात् । तत्र मंत्रः । पक्वान्नपूरितं कुंभं दक्षिणावस्त्रसंयुतम् । ददामि द्विजवर्याय देवो नः प्रीयतामिति ॥ १ ॥ इति प्रत्येकं दद्यात् । ( देवपदस्थाने केशवादिनाम्ना ऊहः कार्यः ) ( अस्मद्देशे तु षड्विंशतिजलपूरितघटदानं कुर्वंति तदपि समीचीनम् ) ततः पीठदानम् । देशकालौ संकीर्त्य । इदं पीठं सोपस्करं लक्ष्मीनारायणप्रतिमायुतं श्रीमहाविष्णुप्रीतये अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति आचार्याय दद्यात् । ततः कलशोदकेन सपत्नीकं यजमानं पूर्वोक्तमंत्रैरभिषिच्य । अग्निं संपूज्य । यांतु देवगणाः सर्वे० १ इति विसृज्य चतुर्विंशतिः षड्विंशतिर्वा ब्राह्मणान् पायसादिना संभोज्य तेभ्यो यथाशक्ति दक्षिणां दत्त्वा तैराशिषो गृहीत्वा व्रतसंपूर्णतां वाचयेत् । जपच्छिद्रं तपच्छिद्रं यच्छिद्रं व्रतकर्मणि । सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥ १ ॥ इति ब्राह्मणान्संप्रार्थ्य अच्छिद्रं भवतु ते व्रतमिति ब्राह्मणाः प्रतिवदेयुः । अनेन कर्मणा श्रीनारायणः प्रीयतामित्युक्त्वा बांधवादिभिः सोत्सवः भुंजीत ॥ इति बोधायनोक्तशुक्लकृष्णैकादशीव्रतोद्यापनप्रयोगः ॥ अथ मार्गशीर्षकृष्णैकादश्यां वैतरणीव्रतम् ( भविष्योत्तरे ) प्रातर्नद्यादौ

स्नात्वा नित्यकर्म कृत्वा देशकालौ संकीर्त्य । मम यमलोकाऽदर्शनपूर्वकविष्णुलोकप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थं वैतरणीव्रतं करिष्ये । इति संकल्प्य । मध्याह्ने पुनःस्नात्वा नित्यकर्म निर्वर्त्य रात्रौ कृष्णां सुरभिमानीय पूर्वाभिमुखीं संस्थाप्य । अग्रपादादारभ्य पश्चात्पादद्वयावधि गां गंधादिभिः संपूजयेत् । तद्यथा । गोरग्रपादाभ्यां नमः १ गोरास्याय नमः २ गोः शृंगाभ्यां नमः ३ गोः स्कंधाभ्यां नमः ४ गोः पुच्छाय नमः ५ गोः पश्चात्पादाभ्यां नमः ६ गोः सर्वांगेभ्यो नमः ७ इति स्थानेष्वेतेषु गंधादीनि निक्षिप्य धूपदीपनैवेद्यादिभिः संपूज्य गोः पुच्छं गृहीत्वा पूर्ववत्तर्पणं कृत्वा प्रार्थयेत् । असिपत्रादिकं घोरं नदीं वैतरणीं तथा । प्रसादात्ते तरिष्यामि गौर्मातस्ते नमोनमः ॥ १ ॥ सुखेन तीर्यते यस्मान्नदी वैतरणी ध्रुवम् । तस्मादेकादशीं कृत्वा नाम्ना वैतरणी भवेत् ॥ २ ॥ एवं संपूज्य नक्तव्रतं कुर्यात् । तद्यथा । मार्गशीर्षादिके भक्तं यावन्मासचतुष्टयम् । अन्यन्मासचतुष्कं तु यावकाशनमेव च ॥ १ ॥ श्रावणादिषु मासेषु चतुर्ष्वद्याच्च पायसम् । तदन्नस्य त्रयो भागा गोगुरुस्वार्थमेव च ॥ २ ॥ मासिमासि प्रकुर्वीत मासद्वादशकं व्रतम् । उद्यापनं ततः कुर्यात्पूर्णे संवत्सरे तदा ॥ ३ ॥ शय्या सतूलिका कार्या दंपत्योः परिधानकम् । सवत्सा कृष्णवर्णा तु धेनुः

कार्या पयस्विनी ॥ ४ ॥ सौवर्णी सुरभिं कृत्वा स्थापयेत्तूलकोपरि । सुरभिं पूजयेन्मन्त्रैः पूर्वोक्तैर्भ
क्तिसंयुतः ॥ ५ ॥ ततस्तां गुरुवे दद्यात्सर्वं तत्र क्षमापयेत् । भारो लोहस्य दातव्यः कार्पासद्रोण
संयुतः ॥ ६ ॥ वैतरण्यां समाप्त्यर्थं ब्राह्मणाय कुटुंबिने ॥ नारी वा पुरुषो वापि व्रतस्यास्य प्रभा
वतः ॥ ७ ॥ राज्यं बहुदिनं भुक्त्वा स्वर्गलोके महीयते । इति । अन्यत्सर्वं पूर्ववत् । इति वैतरणी
व्रतोद्यापनविधानम् । अथ गोपद्मव्रतम् ॥ तच्च आषाढशुक्लैकादश्यां समारभ्य कार्तिकशुक्ल
द्वादश्यंतं कार्यम् । एतद्व्रतं पंचवर्षात्मकम् । अस्योद्यापनं तु पूर्णे पंचमे वर्षे कार्तिकशुक्लैकादश्यां
कार्यम् । तत्र प्रयोगः देशकालौ संकीर्त्य ममात्मनो यमदंडनिरसनपूर्वकपुत्रपौत्रसौभाग्यादि
वृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पंचवर्षाचरितगोपद्मव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूज
नाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः । आचार्यो गोमयोपलिप्ते शुद्धस्थाने व्रीहिपिष्टकैः
त्रयस्त्रिंशत्पद्मानि कृत्वा पंचरंगैः शोभयित्वा गंधपुष्पैः प्रपूजयेत् । ततः सर्वतोभद्रे ब्रह्मादिदेवा
न्संपूज्य तन्मध्ये ताम्रकलशोपरि कर्षमात्रसुवर्णरचितां लक्ष्मीनारायणप्रतिमां चतुर्भुजीं गोपाल
रूपां प्रतिष्ठाप्य । ॐ इदम्विष्णुर्विचक्रमे० १ इत्यावाह्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य केशवा

द्विादशनामभिः पूजयेत् । ततः । नमस्ते देवदेवेश नमस्ते गरुडध्वज । नमस्ते विष्णवे तुभ्यं व्रतस्य फलदायक ॥ १ ॥ इति प्रार्थ्य रात्रौ गीतवाद्यादिमंगलैर्जागरणं कृत्वा प्रातः पुनः संपूज्य अग्निं प्रतिष्ठाप्य आज्यभागांते केशवादिद्वादशनामभिः समित्तिलाज्यद्रव्यैर्होमं कृत्वा । ॐ इदम्विष्णुर्विचक्रमे० १०८ इति मन्त्रेणाऽष्टोत्तरशतं पायसं हुत्वा ब्रह्मादिसर्वतोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् । ततः स्विष्टकृदादिपूर्णाहुत्यंतं होमशेषं समाप्य सवत्सां धेनुमाचार्याय दत्त्वा सपत्नीकान्पंच ब्राह्मणान् षड्रसैः संभोज्य तेभ्यो वस्त्राणि पंचवायनानि च दत्त्वा अन्यानपि यथाशक्त्या ब्राह्मणान्संभोजयेत् । ततो बंधुभिः सार्द्धं स्वयं भुञ्जीत । कृत्वा चेदं व्रतं पुण्यं सर्वान्कामानवाप्नुयात् । अंते स्वर्गपदं गच्छेत्सर्वपापविवर्जितः ॥ १ ॥ इति गोपद्मव्रतोद्यापनम् ॥ इति श्रीगौडपंडितश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे एकादशीव्रतोद्यापनानि समाप्तानि ॥ ११ ॥ अथ द्वादशीव्रतोद्यापनानि लिख्यंते ॥ तत्र तावत् वामनजयंतीव्रतोद्यापनम् ॥ तच्च भाद्रशुक्लैकादशीयुतायां द्वादश्यां श्रवणयोगे कार्यम् । बुधवारयोगे प्रशस्ततरम् । तत्र प्रयोगः । प्रातरुत्थाय दंतधावनं कृत्वा नद्यादौ । ॐ वरो वरेण्यो वरदो वराहो धरणीधरः । अपवित्रं पवित्रं मां करोतु भगवान्हरिः ॥

इति मंत्रेण तिलकल्कं स्वशरीरे विलिप्य यथाविधि स्नात्वा स्नानांगतर्पणं विधाय संध्यादिनित्य कर्म निर्वर्त्य संकल्पं कुर्यात् । देशकालौ स्मृत्वा ममात्मनः अखिलपापक्षयपूर्वकपिशाचादिदुर्योनिनिरसनद्वारा श्रीविष्णुलोकप्राप्त्यर्थमाचरितवामनजयंती ( श्रवणद्वादशी ) व्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कर्म कुर्यात् । ततः आचार्यो वेद्यां सर्वतोभद्रं विरच्य तत्र ब्रह्मादिदेवानावाह्य संपूज्य तन्मध्ये यथाविधि ताम्रकलशंसंस्थाप्य तदुपरि सुवर्णरौप्यताम्रदारुवंशजान्यतमं पात्रं निधाय तिलाढकेन प्रस्थेन वा यवगोधूमैर्वा प्रपूर्य तत्र मृगचर्म प्रसार्य्य तत्र कुंकुमादिना द्वादशारयुतं पद्मं विलिख्य तन्मध्ये सौवर्णं वामनं शिखाकमंडलुधरं छत्रयज्ञोपवीतिनं संस्थापयेत् । ततः ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः । अतोधर्माणिधारयन् ॥ १ ॥ ॐ भूर्भुवः स्वः ॐ वामनाय नमः वामनमावाहयामि इत्यावाह्य पुरुषसूक्तेन षोडशोपचारैः यथाकालोद्भवैः पुष्पैः फलैश्च नानाविधभक्ष्यभोज्यैश्च सम्पूजयेत् । पुष्पपूजांते अंगपूजां कुर्यात् । ॐ मत्स्याय नमः पादौ पूजयामि १ कूर्माय० जानुनी पू० २वराहाय० गुह्यं पू० ३नृसिंहाय०नाभिं पू० ४ वामनाय० उदरं पू० ५ परशुरामाय० दक्षिणभुजं पू० ६ दाशरथिरामाय० वामभुजं

पू० ७ कृष्णाय० मुखं पू० ८ बुद्धाय० कर्णौ पू० ९ कल्किने नमः शिरः पूजयामि १० ॐ नमो भगवते वासुदेवाय सर्वांगं पूजयामि ११ इति संपूज्य दधिभक्तनैवेद्यं निवेद्य प्रार्थयेत् । नमस्तेऽदिति पुत्राय नमस्ते कश्यपात्मज । त्रिविक्रमाय देवाय वामनाय नमोनमः ॥ १ ॥ ततो न्यग्रोधमू ॐ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे । वोचेमशन्तमंहृदे ॥ इतिमंत्रेण संपूज्य दध्योदनयुतं शिक्यं जल पूरितं करकं च संपूजयेत् । तत्र मंत्रौ । शिक्योसि दधिभक्तोऽसि लंबितोसि मयोपरि । सूत्रेणैवाश्रि तोसि त्वं वामनः प्रीयतामिति ॥ १ ॥ करकं पूजयिष्यामि सरितां संगमे जलैः । पंचरत्नसमायुक्तं तेन तुष्यतु वामनः ॥ २ ॥ ततः सर्वान्प्रार्थयेत् । पर्जन्यो वरुणः सूर्यः केशवः सलिलं शिवः । त्वष्टा यमो वैश्रवणः सदा पापं हरंतु मे ॥ १ ॥ ततः कथाश्रवणादिना रात्रौ जागरणं कृत्वा प्रातःस्नात्वा अग्निं प्रतिष्ठाप्य आज्यभागांते प्रधानदेवश्रीवामनाय पायसघृतसमित्तिलैः प्रतिद्रव्यमष्टोत्तरशतसं ख्यया हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् । तत्र होममंत्राः । ॐ इरावतीतिमंत्रेण पायसं घृतं च । ॐ इदम्विष्णुर्विचक्रमे० इति मंत्रेण समित् । ॐ त्रीणिपदाविचक्रमे०इति मंत्रेण । ॐ विष्णोःकर्माणिपश्यत० इति मंत्रेण तिलाश्च होतव्याः । ततो द्वादशसंख्याकान् विप्रान्वस्त्रादि

ना संपूज्य दधिभक्तान्नोपवीतचन्दनयुतान्सुगंधजलपूरितान्द्वादशकरकांस्तेभ्यो दद्यात् । तत्र मंत्रः । सुगंधिजलसंपूर्णं दधिभक्तयुतं द्विज । करकं ते प्रदास्यामि वामनः प्रीयतामिति ॥ १ ॥ वामनः प्रतिगृह्णाति वामनो वै ददाति च वामस्तारकोभाभ्यां वामनाय नमोनमः ॥ १ ॥ इति मंत्रेण सोपस्करं पीठमाचार्याय दद्यात् । ततो व्रतपूर्त्तये गां च दत्त्वा विप्रान् भोजयेत् ॥ इति श्रीवामनजयंती ( श्रवणद्वादशी ) व्रतोद्यापनं समाप्तम् ॥ ॥ अथ पौषकृष्णद्वादश्यां सुरूपाद्वादशीव्रतम् । अथवा पौषे पुष्यर्क्षे यदा तदा वा कार्यम् । ( एतत्तु गुर्जरदेशे प्रसिद्धम् ) देशकालौ संकीर्त्य ममात्मनो दौर्भाग्यदौर्वर्ण्यादिशमनपूर्वकम् अतुलसौभाग्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सुरूपाद्वादशीव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं कर्म पूर्ववत्कुर्यात् । ततः आचार्यः सर्वतोभद्रे ब्रह्मादिदेवान्संपूज्य तन्मध्ये ताम्रकलशं संस्थाप्य तदुपरि तिलपूर्णपात्रं धृत्वा तत्र सौवर्णं लक्ष्मीसहितं नारायणं स्थापयेत् । ततः ॐ सहस्रशीर्षा० इति पुरुषसूक्तेन षोडशोपचारैः संपूज्य परितः । ॐ शंखाय नमः १ चक्राय० २ गदायै० ३ पद्माय नमः ४ इत्यायुधानि संपूज्य तिलमिश्रितपक्वान्ननैवेद्यं समर्प्य विष्णवे अर्घ्यं दद्यात् । तत्र मंत्रः परमशांताय विरूपाक्ष नमोस्तु

ते । सर्वकल्मषनाशाय गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ ततः स्वयमुपोष्य रात्रौ जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते प्रधानदेवमहाविष्णवे ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिंर्ठसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलं स्वाहा ॥ इतिमंत्रेणाष्टोत्तरशतं शुद्धगोमयं व्याहृतिभिश्च तिलद्रव्यैर्विष्णुं लक्ष्मीयुतं ध्यायन् होमं कुर्यात् ( अत्र अमेध्यभक्षणरहिताया गोः पतितं गोमयमंतरिक्षाद्ग्राह्यम् ) ततः सर्वतोभद्रमंडलदेवताभ्यश्चैकैकयाज्याहुत्या हुत्वा होमांते वैष्णवं श्राद्धं च कृत्वा सोपस्करां विष्णुमूर्तिं विप्राय दद्यात् । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा प्रदक्षिणं कृत्वा बंधुभिः सह स्वयं भोजनं कुर्यात् । अथवा रात्रौ होमादिकं कृत्वा प्रातः स्वयं पारणं कुर्यात् । एवं यः कुरुते देवि सुरूपाद्वादशीव्रतम् । दौर्भाग्यं स न पश्येत अपि जन्मांतरार्जितम् ॥ १ ॥ इति भविष्योत्तरोक्तसुरूपाद्वादशीव्रतोद्यापनम् ॥ अथ विष्णुपंचकव्रतं तदुद्यापनं च लिख्यते ( विष्णुधर्मोत्तरे ) तच्च भाद्रपदशुक्लद्वादश्यां यदा श्रवणर्क्षं तदारभ्य वर्षपर्यंतं कार्यम् । तत्र मासेमासे पंचोपोषणानि कार्याणि । एकं श्रवणनक्षत्रे १ द्वितीयं कृष्णैकादश्याम् २ तृतीयं शुक्लैकाद० ३ चतुर्थम् अमायाम् ४ पंचमं पूर्णिमायाम् ५ तत्र सर्वत्र विष्णुं संपूज्य उपवासं कुर्यात् । एवं संवत्सरं कृत्वा अंते द्वादश्या

मुद्यापनं कार्यम् ॥ अथोद्यापनप्रयोगः । देशकालौ संकीर्त्य ममात्मनः पंचमहापातकोपपातकादि सकलपातकक्षयपूर्वकविष्णुलोकप्राप्तिद्वारा श्रीमहाविष्णुप्रीतये आचरितस्य वर्षपर्यंतं विष्णुपंचक व्रतस्य पूर्णतासिद्धये तदुद्यापनं करिष्ये । इति संकल्प्य । गणेशपूजनादि आचार्यवरणांतं पूर्वव त्कर्म कुर्यात् । ततः आचार्यः सर्वतोभद्रे ब्रह्मादिदेवान्संपूज्य मध्ये पूर्वे दक्षिणे पश्चिमे चोत्तरे पंच ताम्रकलशान् यथाविधि संस्थाप्य तेषामुपरि पंच सौवर्णीः विष्णुप्रतिमाः क्रमेण वक्ष्यमाणमंत्रपंच केन प्रतिष्ठापयेत् । तद्यथा । प्रथमे श्रवणर्क्षकलशे । ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः । अतो धर्माणिधारयन् ॥ ॐ विष्णो इहागच्छ । ॐ विष्णवे नमः ॥ १ ॥ द्वितीये शुक्लैकादशीकलशे । ॐ तद्विष्णोः परमं पदंसदापश्यंतिसूरयः । दिवीवचक्षुराततम् ॥ २ ॥ तृतीये पूर्णिमाकलशे ॐ तद्विप्रासो विपन्यवोजागृवा ᳪ सःसमिन्धते । विष्णोर्यत्परमंपदम् ॥ ३ ॥ चतुर्थे कृष्णैकादशीकलशे ॐ अतोदेवाऽ अवन्तुनोयतोविष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ ४ ॥ पंचमे अमावास्याकलशे ॐ इदम्विष्णु र्विचक्रमेत्रेधांनिदधेपदम् । समूढमस्यपा ᳪ सुरेस्वाहा ॥ ५ ॥ इत्यावाह्य । ॐ मनोजूतिर्जुषता० इति प्रतिष्ठाप्य । ततः क्रमेण कलशपंचके तत्तद्द्वादश देवताः परितः स्थापयेत् । तद्यथा । प्रथमे । ॐ

गोवर्द्धनधरमावाहयामि ॐ गोवर्द्धनधराय नमः १ (एवं सर्वत्र) अनंताय नमः २ पुंडरीकाक्षाय० ३ नित्याय० ४ वेदगर्भाय०५ यक्षाय०६ पुरुषाय०७ सुब्रह्मण्याय०८ जयाय०९ शौरये०१० वैकुंठाय० ११ गरुडध्वजाय नमः १२ (द्वितीये कलशे) केशवाय० १ नारायणाय० २ माधवाय० ३ गोविंदाय० ४ विष्णवे० ५ मधुसूदनाय० ६ त्रिविक्रमाय० ७ वामनाय० ८ श्रीधराय० ९ हृषीकेशाय० १० पद्मनाभाय० ११ दामोदराय० १२ (तृतीये) विधवे नमः १ शशिने० २ शशांकाय० ३ चंद्राय० ४ सोमाय० ५ उडुपाय० ६ मनोरमाय० ७ अमृताय० ८ पावनाय० ९ हिमकृताय० १० निशाकराय० ११ आप्यायनाय० १२ (चतुर्थकलशे) संकर्षणाय० १ वासुदेवाय० २ प्रद्युम्नाय० ३ अनिरुद्धाय० ४ पुरुषोत्तमाय० ५ अधोक्षजाय० ६ नारसिंहाय० ७ अच्युताय० ८ जनार्दनाय० ९ उपेंद्राय० १० हरये० ११ कृष्णाय० १२ (पंचमे) महीधराय० १ जगन्नाथाय०२देवेंद्राय० ३ देवकीसुताय० ४ चतुर्भुजाय० ५ गदापाणये० ६ सुरेशाय० ७ सुलोचनाय० ८ चार्वंगाय० ९ चक्रपाणये०१० सुमित्राय० ११ असुरांतकाय नमः १२ इत्यावाह्य पुरुषसूक्तेन पूर्वोक्तपंचमंत्रैश्च षोडशोपचारैः संपूज्य पूर्वोक्तषष्टिनामभिर्नमस्कारान् कृत्वा रात्रौ जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभा

गांते पूर्वोक्तैः पंचमंत्रैः पृथक्पृथङ् महाविष्णवे घृताक्तपायसापूपपंचामृतसघृततिलादिद्रव्यैरष्टोत्तर
शतं हुत्वा श्रवणदेवताभ्यो घृताक्ताऽपूपैः १ शुक्लैकादशीदेवताभ्यो गुडपायसेन २ पूर्णिमादेवताभ्यश्च
घृतपायसाभ्याम् ३ कृष्णैकादशीदेवताभ्यः पंचामृततिलौदनैश्च ४ अमादेवताभ्यश्चतिलमु
द्गगुडौदनैश्च ५ प्रत्येकमेकैकाहुत्या होमं कृत्वा सर्वतोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् ।
ततो होमांते आचार्यं संपूज्य सोपस्करां विष्णुप्रतिमां व्रतपूर्त्तये गां च दत्त्वा विभवे
सति सस्यवतीं भूमिं च दद्यात् । ततः अन्यपंचब्राह्मणेभ्यो गोमेदपुष्परागवैडूर्यनीलमाणि
क्यानि इति पंचरत्नानि दक्षिणासहितानि ॐ हिरण्यगर्भ० १ इति मंत्रेण दत्त्वा षष्टिब्राह्मणान्
पायसापूपादिभिः संभोज्य तैराशिषो गृहीत्वा बंधुभिः सह भुंजीत । एवं कृते पंचमहापातकादि
भ्यो मुक्तो भवति ॥ इति विष्णुपञ्चकव्रतोद्यापनप्रयोगः ॥ इति गौडपंडितश्रीचतुर्थीलालविरचिते
व्रतोद्यापनप्रकाशे द्वादशीव्रतोद्यापनानि ॥ ॥ अथ त्रयोदशीव्रतोद्यापनानि ॥ तत्र तावत् आषा
ढशुक्लत्रयोदश्यां जयापार्वतीव्रतम् । एतद्व्रतं गुर्जरदेशे प्रसिद्धम् । तच्च विंशतिवर्षपर्यंतम् । त्रयोदशी
मारभ्य तृतीयापर्यंतं षड्दिनात्मकं च कार्यम् । प्रत्यहमुमामहेश्वरपूजा कार्या । देशकालौ स्मृत्वा

ममात्मनो वैधव्यनाशाऽखंडसौभाग्यपुत्रपौत्रादिप्राप्तिद्वारा श्रीमदुमामहेश्वरप्रीत्यर्थं जयापार्वतीव्रतं करिष्ये इति संकल्प्य । मंडले कलशोपरि सुवर्णवृषभोपरि सुवर्णराजतनिर्मितौ उमामहेश्वरौ ॐ गौरीर्मिमाय० १ इति मंत्रेण । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रःप्रचोदयात् २ इत्यनेन च संस्थाप्य षोडशोपचारैः पूजयेत् ॥ ततः सुवासिनीं संपूज्य नक्तव्रतं कुर्यात् । तत्र स्वभक्षणनियमप्रकारः । पंचाब्दं यावनालम् । पंचाब्दं लवणवर्जिता यवाः । पंचाब्दमिक्षुरसवर्जिता स्तंडुलाः । पंचाब्दं मुद्गाश्च भक्षणीयाः । यूथिकादंतकाष्ठम् । व्रतांते उद्यापनम् । तत्र पूर्वोक्तसं कल्पं कृत्वा गणेशपूजनाद्याचार्यवरणांतं कर्म कृत्वा । लिंगतोभद्रे ताम्रकलशोपरि सौवर्णं राजतं वा वृषभं संस्थाप्य तदुपरि सौवर्णीं गौरीप्रतिमां राजतीं महेश्वरप्रतिमां च पूर्वोक्तमंत्राभ्यां प्रतिष्ठाप्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य रात्रौ जागरणं कुर्यात् ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते । गौर्यै महेश्वराय च पायसतिलाभ्यामष्टोत्तरशतं पूर्वोक्तमंत्राभ्यां प्रत्येकं हुत्वा मंडलदेवताभ्यश्चै कैकयाज्याहुत्या होमं कुर्यात् । ततो होमांते विंशतिमिथुनानि वस्त्रादिना संपूज्य परमान्नेन संभोज्य पक्वान्नसौभाग्यद्रव्ययुतं वायनं सदक्षिणाकं दत्त्वा व्रतपर्त्तये आचार्याय गां सोपस्करं प्रतिमाद्वयं

च दत्त्वा सर्वरसयुतं स्वयं भुंजीत । इति भविष्योत्तरोक्तं जयापार्वतीव्रतोद्यापनम् ॥ ॥ अथ गोत्रिरात्रव्रतोद्यापनम् ॥ एतद्व्रतं भाद्रशुक्लत्रयोदश्यामथवा आश्विनशुक्लत्रयोदश्यां यथाचारं कार्यम् । व्रतं त्रिरात्रोपोषणम् । वर्षत्रयात्मकं च कर्त्तव्यम् । चतुर्थे वर्षे प्राप्ते पूर्णिमायामुद्यापनं कार्यम् ॥ अथोद्यापनप्रयोगः ॥ पूर्णिमायां प्रातः स्नात्वा संध्यादिनित्यकर्म समाप्य मध्याह्ने पुनर्नद्यादौ स्नात्वा देवर्षिपितृतर्पणं च कृत्वा रात्रौ गोमयोपलिप्ते शुद्धदेशे स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकसत्पुत्रसुखसौभाग्याद्यभिवृद्धिद्वारा श्रीलक्ष्मीनारायणप्रीत्यर्थं वर्षत्रयाचरितगोत्रिरात्रव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रमंडले ब्रह्मादिदेवान्संपूज्य तन्मध्ये ताम्रकलशं यथाविधि संस्थाप्य पूर्णपात्रे पट्टवस्त्रं प्रसार्य्य तत्र कुंकुमादिना अष्टदलं कृत्वा तत्रैव कर्षसुवर्णनिर्मितां श्रीलक्ष्मीनारायणप्रतिमां नूतनपट्टवस्त्रयुतां संस्थाप्य । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳩंसुरेस्वाहा ॥ ॐ भूर्भुवःस्वः लक्ष्मीनारायण इहागच्छ इहतिष्ठ इत्यावाह्य पुरुषसूक्तेन पंचामृतैः नानाभक्ष्यभोज्यादिनैवेद्ययुतैश्च षोडशोपचारैः संपूज्य । तत्रैव सवत्सां धेनुं च

पूजयेत् । तत्र मंत्रः । पंच गावः समुत्पन्ना मथ्यमाने महोदधौ ॥ तासां मध्ये तु या नंदा तस्यै धेन्वै नमोनमः ॥ १ ॥ गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः ॥ गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ॥ २ ॥ इति प्रार्थ्य अर्घ्यं दद्यात् । सनारिकेलकूष्मांडमातुलुंगं सदाडिमम् । गोत्रि रात्रव्रतार्थाय सफलं च करे धृतम् ॥ सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥ एवं संपूज्य रात्रौ जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते लक्ष्मीनारायणाय ॐ इदम्विष्णुर्वि चक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳪंसुरेस्वाहा ॥ इति मंत्रेणाष्टोत्तरशतं पायसाज्यादिद्रव्यै र्हुत्वा ॥ ॐ आगावो अग्मन्नुतभद्रमक्रन्त्सीदन्तुगोष्ठेरणयन्त्वस्मे । प्रजावतीः पुरुरूपाऽइहस्यु रिन्द्रायपूर्वीरुषसोदुहानाः १ इति मंत्रेण धेन्वै पायसद्रव्येण एवाष्टोत्तरशतमष्टाविंशतिर्वा जुहुयात् । ततः सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतीर्हुत्वा होमशेषं समाप्य वस्त्रादिभिराचार्यं संपूज्य तिस्रो धेनवः सवत्सामेकां वा सुशीलां बहुदोग्ध्रीं तरुणीं सोपस्करां गां दत्त्वा शय्यां सोपस्करां पीठं च दद्यात् । ततो वेणुपात्रस्थनारिकेलद्राक्षाखर्जूरदाडिमबीजपूरसौभाग्यद्रव्ययुतं वायनं सदाक्षिणाकं दंपतीभ्यो दत्त्वा यथाशक्ति ब्राह्मणान्परमान्नेन संभोज्य तैराशिषो गृहीत्वा बांधवजनैः सह भुञ्जीत ।

एवमुद्यापनं कार्यं व्रतस्य फलमिच्छता ॥ नारी वा पुरुषो वापि पुत्रवाञ्जायते ध्रुवम् ॥ इहलोके सुखं
भुक्त्वा अंते गोलोकमाप्नुयात् ॥ १ ॥ इति भविष्योत्तरोक्तं गोत्रिरात्रव्रतोद्यापनम् ॥ ॥ अथ पक्षप्र
दोषव्रतोद्यापनम् ॥ एतद्व्रतं पक्षद्वयस्य पूर्वविद्धायां त्रयोदश्यां वर्षपर्यंत यावज्जीवं वा कार्यम् ।
शनिवारयोगे शनिप्रदोषस्तत्र महाफलम् । भौमयोगे ऋणमोचनम् । शुक्रवारयोगे सौभाग्यस्त्रीस
मृद्धिः । आदित्यसंयोगे आरोग्याप्तिः । सोमवारसंयोगे पुत्राप्तिश्च भवति ॥ तदुद्यापनं तु कार्त्तिका
दिशुभमासेषु कर्तव्यम् । अथोद्यापनप्रयोगः कार्तिके श्रावणे वा मंदवारादियुतायां पूर्णशुक्लत्रयो
दश्यां देशकालौ संकीर्त्य ममात्मनः समस्तपापक्षयपूर्वकाऽऽयुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिशत्रुप
राजयद्वारा श्रीमदुमामहेश्वरप्रीत्यर्थम् आचरितपक्षप्रदोषव्रतोद्यापन करिष्ये । इति संकल्प्य गणेशपूज
नाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततो लिंगतोभद्रे तत्रस्थदेवान्संपूज्य मध्ये यथाविधि ताम्रक
लशं संस्थाप्य तदुपरि रौप्यपात्रं धृत्वा तंडुलैः परिपूर्य्य तत्र कर्षसुवर्णरचितामुमामहेश्वरप्रतिमां
पुरतो राजतं वृषभं च संस्थाप्य वस्त्रमाल्यविभूषणैर्भूषयित्वा । ॐ देवेश भक्तसुलभ सर्वावरणसं
युत । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥ इति प्रतिष्ठापयेत् । ततः पुरुषसूक्तेन अथवा

नमस्ते रुद्र० इति रुद्राध्यायोक्तषोडशमंत्रैः ॐ भवानीशंकराभ्यां नमः इतिमंत्रेण च षोडशोपचारैः पंचामृतनानावस्त्राभरणपुष्पबिल्वपत्रफलभक्ष्यभोज्यादिभिश्च संपूज्य कर्पूरगर्भितबहुवर्तिभिर्नी राजनं कृत्वा प्रदक्षिणात्रयं विधाय साष्टांग प्रणामं कुर्यात् । तत्र पुष्पपूजांते आवरणपूजा कार्या तद्यथा । परितः ईशानपूर्वादिक्रमेण । ॐ ईशानाय नमः १ तत्पुरुषाय नमः २ अघोराय नमः ३ वामदेवाय० ४ सद्योजाताय० ५ इति पंच मूर्तीः पूजयेत् । पुनः ईनः ईशनादिषु । ॐ निवृत्त्यै नमः १ प्रतिष्ठायै० २ विद्यायै० ३ शांत्यै० ४ शांत्यतीतायै० ५ इति कलाः पूजयेत् । पुनः पूर्वादिक्षु सूर्याय० १ इंदवे० २ क्षित्यै० ३ तोयाय० ४ अग्नये० ५ पवनाय० ६ आकाशाय० ७ यज्वने नमः८ इत्यष्टमूर्तीः पूजयेत् । पूर्वादिषु अनंताय० १ सूक्ष्माय० २ शिवोत्तमाय० ४ एकनेत्राय० ४ एकरुद्राय० ५ त्रिमूर्तये० ६ श्रीकंठाय० ७ शिखंडिने० ८ इति विघ्नेशान् पूजयेत् । उत्तरादिक्रमेण । उमायै नमः १ चंडेश्वराय० २ नंदिने ३ महाकालाय० ४ गणेशाय० ५ वृषभाय० ६ भृंगरिटये० ७ स्कंदाय नमः ८ इति गणेशान् पूजयेत् । तद्बाह्ये भूपुरे पूर्वादिक्रमेण । ॐ इंद्राय नमः १ अग्नये० २ यमाय० ३ निर्ऋतये० ४ वरुणाय० ५ वायवे० ६ कुबेराय० ७ ईशानाय० ८ ईशानपूर्वयोर्मध्ये ब्रह्मणे नमः ९

निर्ऋतिपश्चिमयोर्मध्ये अनंताय नमः १० इति दिक्पालान्पूजयेत् । तद्बाह्ये पूर्वादिषु तत्तत्समीपे ॐ वज्राय० १ शक्त्यै० २ दंडाय० ३ खड्गाय० ४ पाशाय० ५ अंकुशाय० ६ गदायै० ७ त्रिशूलाय० ८ पद्माय० ९ चक्राय नमः १० इत्यायुधानि संपूजयेत् । एवं सगणं शिवं संपूज्य अर्घ्यं दद्यात्० । रजतादिपात्रे क्षीरकुशदूर्वादधिघृततंडुलसर्षपगंधपुष्पफलादि क्षिप्त्वा जलेनापूर्य जानुभ्यामवनीं गत्वा । ॐ भयरोगादिदारिद्र्यपापक्षुदपमृत्यवः । ऋणशोकमनस्तापा नश्यंतु मम सर्वदा ॥ इत्यनेन त्रिवारमर्घ्यं दत्त्वा प्रार्थयेत् । प्रसीद देवदेवेश प्रसीद परमेश्वर । प्रसीद सोम सर्वज्ञ प्रसीद करुणाकर ॥ १ ॥ जय देव जगन्नाथ जय शंकर शाश्वत । जय सर्वसुराध्यक्ष जय सर्वसुरार्चित ॥२॥ जय सर्वगुणातीत जय सर्ववरप्रद । जय नित्य निराधार जय विश्वंभराव्यय ॥ ३ ॥ जय विश्वैकवंद्येश जय नागेंद्रभूषण । जय गौरीपते शंभो जय नित्य निरंजन ॥ ४ ॥ जय नाथ कृपासिंधो जय भक्तार्तिभंजन । जय दुस्तरसंसारसागरोत्तारण प्रभो ॥ ५ ॥ प्रसीद मे महादेव संसारादस्यखिद्यतः ॥ सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर ॥ ६ ॥ इति प्रार्थ्य क्षमापराधस्तोत्रेण क्षमापयित्वा पुनःपुनर्देवं प्रणम्य ब्राह्मणान्संतर्प्य गीतवादित्रनृत्यकथाश्रवणाद्यैर्गृहे देवालये वा रात्रौ जागरणं कुर्यात् ।

ततः प्रातरुत्थाय नद्यादौ स्नात्वा संध्यातर्पणादि नित्यकर्म संपाद्य षोडशोपचारैः सांगं महेशं संपूज्य स्थंडिले अग्निं प्रतिष्ठापयेत् । ततः कुशकंडिकां कृत्वा आज्यभागांते गौर्य्यै महेश्वराय च पलाशसमिद्बिल्वपत्रतिलपायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया ॐ गौरीर्मिमायसलिलानितक्षत्येक पदीद्विपदीसाचतुष्पदी । अष्टापदी नवपदी॥बभूवुषीसहस्राक्षरापरमेव्योमन्स्वाहा ॥ इदं गौर्य्यै १०८ ॐ त्र्यंबकंयजामहे० ॥ इदं शिवाय १०८ इति मंत्रद्वयेन जुहुयात् । ततः आवरणदेवता भ्यो लिंगतोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या हुत्वा होमशेषं समाप्य सपत्नीकमाचार्य वस्त्रालंकार चंदनैः संपूज्य पयस्विनीं गां सोपस्करां प्रतिपां च दद्यात् । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा दक्षिणाभिः प्रतोष्य दीनानाथांश्च संतर्प्य अच्छिद्रं वाचयित्वा विप्राज्ञया बंधुभिः सह शुचिः भुंजीत ॥ अनेनैव विधानेन कुर्यादुद्यापने विधिम् । आयुरारोग्यमैश्वर्यं पुत्रपौत्रसमन्वितः ॥ शत्रून्विजयते नित्यं प्रसादाच्छंकरस्य च ॥ १ ॥ एवमेव शनिवारादियुतप्रदोषस्य विधिर्ज्ञेयः । इति स्कंदपुराणोक्तं प्रदोषव्रतोद्यापनम् ॥ अथ अनंगत्रयोदशीव्रतं तदुद्यापनं च लिख्यते ॥ तच्च मार्गशीर्षशुक्लत्रयोदशी मारभ्य प्रतिमासं शुक्लत्रयोदश्यां वर्षपर्यंतं कार्यम् ॥ मार्गशीर्षशुक्लत्रयोदश्यां प्रातरश्वत्थकाष्ठेन

दंतधावनं कृत्वा नदीतडागादौ स्नात्वा संध्यादिनित्यकर्म संपाद्य स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य । देशकालौ संकीर्त्य ममात्मनः इह जन्मनि जन्मांतरे च कृत समस्तपापक्षयार्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं दुर्भगत्ववंध्यात्वमृतवंध्यात्वादिदोषनिरसन पूर्वकं तत्तन्मासकल्पोक्तफलप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं च अनंगत्रयोदशीव्रतं करिष्ये इति संकल्प्य । उक्तविधिना पीठे लिंगरूपिणमनंगं प्रतिष्ठाप्य ॐ अनंगाय नमः इति मंत्रेणावाह्य पृथक्पृथक् पंचामृतैर्गंधोदकेन च संस्नाप्य नानागंधैर्मरुबकपुष्पैर्धूपदीपफेणिकानैवेद्यादिभिश्च षोडशोपचारैः संपूज्य । नारिंगफलेनार्घ्यं दद्यात् तत्र मंत्रः । स्वर्गे चैव तु पाताले मर्त्यलोके तथैव च ॥ सर्वव्यापिन्ननंग त्वं गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ इत्यर्घ्यं दत्त्वा प्रार्थयेत् । नमोस्त्वनंगदेवाय सर्वसंघनिवासिने । हृदयस्थाय नित्याय सूक्ष्माय परमेष्ठिने ॥ १ ॥ इति प्रार्थ्य मधुप्राशनं कृत्वा रात्रौ जागरणं च कृत्वा प्रातर्ब्राह्मणसुवासिनीभ्यो भोजनं दत्त्वा स्वयं भुंजीत । एवं सर्वमासेषु त्रयोदश्यासु पोषणं पूजाविधानं च ज्ञेयम् ( दंतकाष्ठपुष्पफलार्घ्यनैवेद्यादिषु च विशेषः ) तद्यथा । पोषशुक्लत्रयोदश्याम् औदुंबरकाष्ठदंतधावनम् । जातीपुष्पैः पूजनम् । दाडिमेनार्घ्यम् । अशोकवर्तिकानैवेद्यम् ।

व्र० ॥९८॥

ॐ नाट्येश्वराय नम इति मंत्रेण पूजा । नाट्येश्वराय शर्वाय ईश्वराय नमोनमः ॥ नमस्ते भुवनेशाय गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ इत्यर्घ्यदानमंत्रः । रात्रौ चंदनं प्राश्य स्वपेत् ॥ २ ॥ माघे न्यग्रोध दंतकाष्ठम् । कुंदपुष्पाणि । बीजपूरेणार्घ्यम् । शर्करा नैवेद्यम् । योगेश्वरो देवता । ॐ योगेश्वराय देवाय योगजंबूनिवासिने । गृहाणार्घ्यं मया दत्तं योगेश्वर नमोस्तु ते ॥ १ ॥ इत्यर्घ्यमंत्रः ॥ ततो मौक्तिकोदकं प्राश्य रात्रौ स्वपेत् ॥ ३ ॥ फाल्गुने बादरं दंतकाष्ठम् । जपापुष्पाणि । कंकोलेनार्घ्यम् । अपूपनैवेद्यम् । वीरेशोनाम देवता । वीरेश्वर वीरभद्र उमाकान्त सुरेश्वर । हिममध्यनिवासिंस्त्वं गृहाणार्घ्यं महेश्वर ॥ १ ॥ इत्यर्घ्यम् । रात्रौ कंकोलं प्राशयेत् ॥ ४ ॥ चैत्रे मल्लिकादंतकाष्ठम् । दमनपुष्पम् । द्राक्षयार्घ्यम् । वटकाः नैवेद्यम् । विश्वरूपदेवता । नमस्ते विश्वरूपाय स्वरूपाय महात्मने । गृहाणार्घ्यं मया दत्तं विश्वरूप नमोस्तु ते ॥ १ ॥ इत्यर्घ्यं दत्वा कर्पूरं प्राशयेत् ॥ ५ ॥ वैशाखे अपामार्गं दंतकाष्ठम् । मल्लिकापुष्पाणि । खर्जूरेणार्घ्यम् । नैवेद्ये सक्तवः । महारूपदेवता । महारूपाय नमस्ते सर्वविज्ञानरूपिणे । गृहाणार्घ्यं मया दत्तं महारूप नमोस्तु ते ॥ १ ॥ इत्यर्घ्यं दत्वा रात्रौ जातीफलं प्राशयेत् ॥ ६ ॥ ज्येष्ठे निर्गुंडीदंतधावनम् । बकुलपुष्पम् । श्रीफले

नार्घ्यम् । नैवेद्ये मंडकाः । प्रद्युम्नदेवता । नमस्ते पशुपतये प्रद्युम्न भुवनेश्वर । गृहाणार्घ्यं मया दत्तं प्रद्युम्न परमेश्वर ॥ १ ॥ इत्यर्घ्यम् । रात्रौ लवंगप्राशनम् ॥ ७ ॥ आषाढे नारिंगकाष्ठेन दंतधावनम् । कदंबपुष्पम् । नारिकेलेनार्घ्यम् । नैवेद्ये दधिभक्तम् । उमापतिर्देवता । उमापते महाबाहो कामदाहक ते नमः । गृहाणार्घ्यं मया दत्तं चन्द्रमौले नमोस्तु ते ॥ १ ॥ इत्यर्घ्यमंत्रः । रात्रौ तिलोदकप्राशनम् ॥ ८ ॥ श्रावणे कारंजं दंतकाष्ठम् । पद्मपुष्पम् । रंभाफलेनार्घ्यम् । नैवेद्ये पायसम् ॥ शूलपाणिर्देवता । नमस्ते गिरिजानाथ नमस्ते भक्तिभावन । गृहाणार्घ्यं मया दत्तं शूलपाणे नमोस्तु ते ॥ १ ॥ इत्यर्घ्यमंत्रः । रात्रौ गंधोदकप्राशनम् ॥ ९ ॥ भाद्रपदे कंकोलकाष्ठेन दंतधावनम् । चंपकपुष्पाणि । नैवेद्ये घृतपूरिकाः । पूगीफलेनार्घ्यम् । त्रिदशेशदेवता । त्रिदशेशाय देवाय सद्योजाताय वै नमः । गृहाणार्घ्यं मया दत्तं सद्योजात नमोस्तु ते ॥ १ ॥ इत्यर्घ्यं दत्वा रात्रौ अगरुं प्राशयेत् ॥ १० ॥ आश्विने कंकतीकाष्ठेन दंतधावनम् । करवीरपुष्पम् । कर्कटिकाफलेनार्घ्यम् । नैवेद्ये शुभ्रमण्डकाः । त्रिदशपतिर्नाम देवता । त्रिदशाधिप देवेश उमाकान्त महेश्वर । त्रिधारूपमयस्त्वं हि अर्घोयं प्रतिगृह्यताम् ॥ १ ॥ इत्यर्घ्यमंत्रः । रात्रौ कांचनं तोयं प्राशयेत् ॥ ११ ॥

ब्र० ॥९९॥

कार्त्तिकशुक्लत्रयोदश्यां कदंबकाष्ठेन दंतधावनम् । रक्तोत्पलैः पूजनम् । कूष्मांडफलेनार्घ्यम् । पूरिका नैवेद्यम् । जगदीश्वरो नाम देवता । नमस्ते जगदीशाय तापिने शूलपाणये । गृहाणार्घ्यं महेशान जगदीश नमोस्तु ते ॥ १ ॥ इति मंत्रेणार्घ्यम् । ततो रात्रौ मदनफलं प्राश्य जागरं कुर्यात् ॥ १२ ॥ एवं सर्वत्र प्रदोषे पूजनं भक्षणं च ज्ञेयम् । ततो वत्सरांते उद्यापनं कार्यम् । तद्यथा । देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकं मार्गशीर्षादितत्तन्मासकल्पोक्तफलप्राप्तिद्वारा श्रीमदर्धनारीश्वरमहेशप्रीत्यर्थम् आचरितानंगत्रयोदशीव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्य वरणांतं पूर्ववत्कर्म कुर्यात् । ततः आचार्यो लिंगतोभद्रे ब्रह्मादिदेवान्संपूज्य मध्यस्थे ताम्रकलशे कर्षसुवर्णरचितमर्द्धनारीश्वरं महेशं संस्थाप्य त्र्यम्बकमंत्रेणावाह्य वस्त्रयुग्मेन संवेष्ट्य षोडशोपचारैः संपूज्य अर्घ्यं दत्त्वा प्रार्थयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते घृताक्तपायसद्रव्येण त्र्यम्ब कमंत्रेणाष्टोत्तरशतं हुत्वा ब्रह्मादिलिंगतोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् । ततो होमांते छत्रोपानत्कमंडलुमुद्रिकासनवस्त्राभूषणादिद्रव्यैराचार्य संपूज्य सवत्सां पयस्विनीं गां सोपस्करां शय्यां चाचार्याय निवेद्य तस्य पादौ मूर्ध्नि समारोप्य प्रणिपत्य प्रार्थयेत् । भगवंस्त्वत्प्रसादेन व्रतसं

पूर्णता मम । एवमस्त्विति संब्रूयात्तव तुष्टोस्तु शंकरः ॥ १ ॥ इति प्रार्थ्य सोपस्करं पीठं च निवेद्य द्वादशाष्टौ वा दंपतीन् ब्राह्मणान् भोजयित्वा स्वयं भुंजीत ॥ एतद्व्रतं मम श्रेष्ठं गुह्याद्गुह्यतरं परम् । राज्यमर्थान्सुतान् सिद्धिमवैधव्यं प्रयच्छति ॥ १ ॥ इति भविष्योत्तरपुराणोक्तमनंगत्रयोदशीव्रतोद्यापनं समाप्तम् ॥ इति पंडितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे त्रयोदशीव्रतोद्यापनानि ॥ ॥ अथ चतुर्दशीव्रतोद्यापनानि ॥ तत्रादौ नृसिंहचतुर्दशीव्रतोद्यापनम् । तच्च वैशाखशुक्लचतुर्दश्यां प्रदोषव्यापिन्यां कार्यम् । स्वातीनक्षत्रशनिवारसिद्धियोगवणिजकरणयोगे महाफलम् । तत्र प्रयोगः । प्रातर्दंतधावनपूर्वकं स्नात्वा संध्यादि नित्यकर्म कृत्वा मध्याह्ने पुनर्नद्यादौ मृत्तिकागोमयधात्रीफलतिलादिभिश्च कातीयस्नानविधिना स्नात्वा शुक्लवाससी परिधाय मध्याह्नसंध्यां कृत्वा नृसिंहं देवं संस्मरन् गृहमागच्छेत् । ततः शुचिदेशे गोमयं प्रलिप्य तत्र स्वासने प्राङ्मुख उपविश्य । आचम्य । प्राणानायम्य देशकालौ संकीर्त्य । ममाखिलपापनाशपूर्वकधनधान्यराज्यायुरारोग्यैश्वर्यपुत्रपौत्रसौभाग्यभुक्तिमुक्त्यादिफलप्राप्तिद्वारा श्रीनृसिंहप्रीत्यर्थमाचरितनृसिंहजयंतीव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः

व्र०
॥१००॥

आचार्यः सर्वतोभद्रे ब्रह्मादिदेवानावाह्य संपूज्य तन्मध्ये ताम्रकलशोपरि स्वर्णमयीं लक्ष्मीनृसिंह प्रतिमां प्रतिष्ठाप्य । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳩंसुरेस्वाहा ॥ इति मंत्रेणा वाह्य । ॐ नमो नृसिंहायेति मूलमंत्रेण पुरुषसूक्तेन च षोडशोपचारैः संपूज्य । नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते । अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः ॥ १ ॥ इति विशेषार्घ्यं दत्त्वा पीतांबर महाबाहो प्रह्लादभयनाशन । यथाभूतेनार्चनेन यथोक्तफलदो भव ॥ १ ॥ इति प्रार्थ्य गीतवादि त्रपुराणश्रवणादिभी रात्रौ जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते । ॐ लक्ष्मीनृसिंहाय स्वाहा इति मंत्रेण । ॐ इदम्विष्णुरित्यनेन वा अष्टोत्तरशतं पायसाज्यतिलैर्हुत्वा ब्रह्मादिदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् । ततो होमांते पुनर्देवं संपूज्य । श्रीनृसिंह रमाकान्त भक्तानां भयनाशन । क्षीरांबुनिधिवासिंस्त्वं चक्रपाणे जना र्दन ॥ व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥ १ ॥ इति प्रार्थ्य देवं विसृज्य आचार्याय सोपस्करं पीठं सवत्सां गां सोपस्करां शय्यां च निवेदयेत् । ततो यथाशक्ति ब्राह्मणान्भोजयित्वा दक्षिणा भिस्तान्प्रतोष्य बंधुभिः सह स्वयं भुंजीत ॥ इति श्रीनृसिंहपुराणोक्तं नृसिंहजयंतीव्रतोद्यापनम् ॥ अथ

अनंतव्रतोद्यापनम् ॥ तच्च भाद्रपदशुक्लचतुर्दश्यां त्रिमुहूर्तव्यापिन्यां कार्यम् । व्रतं तु चतुर्दशवर्षात्मकं यावज्जीवं वा कुर्यात् । तत्र प्रयोगः । चतुर्दश्यां प्रातः पुण्यतीर्थादौ सर्वौषधितिलामलककल्कैः स्नात्वा स्नानांगतर्पणं संध्यादिनित्यकर्म च कृत्वा गृहमागत्य शुद्धमृदा वेदिं कृत्वा तत्र सर्वतोभद्रं पंचवर्णैर्विलिख्य कदलीस्तंभादिभिर्मंडपं कुर्यात् । ततः स्वासने प्राङ्मुख उपविश्य वामभागे पत्नीं चोपवेश्य पवित्रपाणिराचम्य प्राणानायम्य गणपत्यादिस्मरणपूर्वकं संकल्पं कुर्यात् । तद्यथा । ताम्रपात्रे गंधपुष्पाक्षतदूर्वादियुतं जलं गृहीत्वा देशकालौ संकीर्त्य ममात्मनः समस्तपापक्षयपूर्वकचतुर्वर्गफलप्राप्तिद्वारा श्रीमदनंतप्रीत्यर्थम् आचरिताऽनंतव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् ॥ ततः आचार्यः सर्वतोभद्रमंडले ब्रह्मादिदेवता आवाह्य संपूज्य तत्र मध्ये महीद्यौरित्यादिप्रकारेणाऽव्रणं ताम्रकलशं संस्थाप्य तत्र ॐ यमुनामावाहयामि स्थापयामि इत्यावाह्य ॐ यमुनायै नमः इति नाममंत्रेण श्रीसूक्तेन च षोडशोपचारैः ( कथाप्रसंगोक्तप्रकारेण ) आवरणादियुतां पूजां विधाय । भवानि च महालक्ष्मि सर्वकामप्रदायिनि । व्रतं संपूर्णतां यातु यमुनायै नमोऽस्तु ते ॥ १ ॥ इति प्रार्थयेत् । ततस्तदु

व्र०
॥१०१॥

परि अक्षतपूरितपूर्णपात्रं निधाय तत्राष्टदलं विरच्य तन्मध्ये कर्षस्वर्णनिर्मित चतुर्दशग्रंथियुतम नंतम् ॐ सहस्रशीर्षेतिमंत्रेण स्थापयेत् । ततस्तुत्तरतः सप्तधान्योपरि सुविस्तृतां शय्यामास्ता य तत्रापि स्वर्णनिर्मितं लक्ष्मीसहितं हलमुसलयुतमनंतम् ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳬंसुरेस्वाहा ॥ १ ॥ इति मंत्रेण प्रतिष्ठाप्य । ॐ अनंताय नमः इति नाममंत्रेण पुरुष सूक्तेन च। स्वर्णदोरकप्रतिमयोर्वार्षिकवत्पूजनं कार्यम् । पुष्पपूजांते अंगपूजा कार्या । तद्यथा । ॐ अनंताय नमः पादौ पूजयामि १ संकर्षणाय० गुल्फौ पू० २ कालात्मने०जानुनी पू० ३ विश्वरूपिणे० जघने पू० ४ विश्वरूपाय० कटी पू० ५ विश्वसाक्षिणे० मेढ्रं पू० ६ पद्मनाभाय० नाभिं पू० ७ परमा त्मने० हृदयं पू० ८ श्रीकंठाय० कंठं पू० ९ सर्वास्त्रधारिणे० बाहू पू० १० वाचस्पतये० मुखं पू०११ कपि लाय० चक्षुषी पू० १२ केशवाय० ललाटं पू० १३ सर्वात्मने नमः शिरः पूजयामि १४ इत्यंगपूजां कृत्वा ग्रंथिपूजा कार्या। ॐ श्रियै नमः १ मोहिन्यै० २ पद्मिन्यै० ३ महाबलायै०४ अजायै० ५ मंग लायै० ६ वरदायै० ७ शुभायै० ८ जयायै० ९ विजयायै० १० जयंत्यै०११पापनाशिन्यै० १२ विश्व रूपायै० १३ सर्वमंगलायै० १४ अथ ग्रंथिदेवतापूजा । ॐ विष्णवे नमः १ अग्नये० २ आदित्येभ्यो

नमः ३ सहस्राक्षाय० ४ पितामहाय० ५ इंद्राय० ६ पिनाकिने० ७ विघ्नेशाय० ८ स्कन्दाय० ९ सोमाय० १० वरुणाय० ११ पवनाय० १२ पृथिव्यै० १३ वसुभ्यो नभः १४ इति संपूज्य। नमस्ते देवदेवेश नमस्ते धरणीधर। नमस्ते सर्वनागेन्द्र अनंताय नमोनमः ॥ १ ॥ अनंतकामान्मे देहि सर्वकामफलप्रद । अनंताय नमस्तुभ्यं पुत्रपौत्रान्प्रवर्द्धय ॥ २ ॥ व्रतेनानेन संतुष्टो भवत्विह सदा मम। इति प्रार्थ्य गीतवादित्रनृत्यपुराणश्रवणादिना रात्रौ जागरणं कृत्वा प्रातर्होमं कुर्यात् ॥ ( अस्मद्देशीयपंडितास्तु दिवैव होमं ब्राह्मणभोजनादिकर्म च कुर्वंति परंपराव्यवहारसिद्धत्वात् ) तद्यथा। प्रातः स्नात्वा आचार्यादिभिः सह पूर्ववदनंतं संपूज्य तत्पश्चिमे कुंडे स्थंडिले वा अग्निं प्रतिष्ठाप्य कुशकण्डिकां कृत्वा अज्यभागांते दधिमध्वाज्यदुग्धाक्तैरश्वत्थसमिद्भिस्तिलैः पायसेन आज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रं वा अष्टोत्तरशतमष्टाविंशतिं वा । ॐ अतोदेवाऽअवन्तुनोयतोविष्णुर्विचक्रमे। पृथिव्याःसप्तधामभिः ) १०८ ) इति मंत्रेण स्त्रीशूद्रादीनां नाममंत्रेण च जुहुयात्। ततस्तैरेव द्रव्यैः। ॐ अनंताय स्वाहा १ कपिलाय० २ शेषाय० ३ कालात्मने० ४ अहोरात्राय० ५ मासाय० ६ अर्धमासाय० ७ षड्ऋतुभ्यः० ८ संवत्सराय० ९ परिवत्सराय० १० उषसे० ११ कलायै० १२ काष्ठायै०

१३ मुहूर्ताय स्वाहा १४ इति हुत्वा ग्रंथिदेवताभ्यः पीठदेवताभ्यः आवरणदेवताभ्यश्च हुत्वा सर्व तोभद्रमंडलदेवताभ्यश्चैकैकयाज्याहुत्याजुहुयात् । ततो होमशेषं समाप्य पुरुषसूक्तेन अनंतं स्तुत्वा वस्त्रालंकारभूषाद्यैराचार्यं संपूज्य सोपस्करं पीठं सवत्सां गां च दद्यात् । तत्र मंत्रः । प्रतिगृह्य द्विज श्रेष्ठ समस्तफलदायक । त्वत्प्रसादादहं विप्र विमुच्ये भवबंधनात् ॥ १ ॥ अनंतः प्रतिगृह्णाति अनंतो वैददाति च । अनंतस्ताराकोभाभ्यामनंताय नमो नमः ॥ २ ॥ ततः पूर्वेद्युः निमंत्रितांश्चतु र्दश ब्राह्मणान् वस्त्रादिना संपूज्य चतुर्दशकलसान् पक्वान्नादिपूरितान् सदक्षिणाकान् दद्यात् । ततः । क्रियाहीनं भक्तिहीनं द्रव्यहीनं तथैव च । मंत्रहीनं कृतं यच्च परिपूर्णं तदस्तु मे ॥ १ ॥ इति प्रार्थ्य आचार्यादींश्चतुर्दशब्राह्मणान् संभोज्य तैराशिषो गृहीत्वा बंधुयुतः स्वयं भुंजीत ॥ एवं कृतेऽ नंतफलदातानंतो भवेन्नृणाम् ॥ १ ॥ इति भविष्योत्तरपुराणोक्तम् अनंतव्रतोद्यापनं समाप्तम् ॥ ॥ अथ कदलीव्रतोद्यापनम् । तच्च भाद्रपदशुक्लचतुर्दश्यां कार्तिक्यां वा माघ्यां वा वैशाख्यां ज्यैष्ठ्यां वा यथाचारं कार्यम् ॥ तत्र प्रयोगः । पूर्वेद्युरेकभुक्तो द्वितीयदिने प्रातर्नद्यादौ स्नात्वा पंचगव्यं प्राश्य संकल्पं कुर्यात् । देशकालौ संकीर्त्य ममात्मन इह जन्मनि जन्मांतरे च सौभाग्यारोग्य

पुत्रपौत्रधनधान्यलक्ष्मीवृद्धिसर्वदुःखनाशनपूर्वकमुमामहेश्वरप्रीत्यर्थम् आचरितकदलीव्रतोद्यापनं करिष्ये । इति संकल्प्य । कदल्याः परित आलवालं कृत्वा तदुपरि मंडपं चतुर्द्वारयुतं च कृत्वा कदलीमूलदेशे मृदा वेदिं विधाय तत्र लिंगतोभद्रे वा सर्वतोभद्रे ब्रह्मादिदेवता आवाह्य संपूजयेत् । ततस्तन्मध्ये ताम्रकलशस्थपूर्णपात्रोपरि हैमं शिवं गौरीं । ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ इति मंत्रेण । ॐ गौरीर्मिमाय० २ इति मंत्रेण च प्रतिष्ठाप्य पुरतो वृषभं राजतं च प्रतिष्ठापयेत् । यस्मिन्देशे कदली न लभ्यते तत्र सुवर्णकदलीं कृत्वा तत्रैव स्थापयेत् । एवं प्रतिष्ठाप्य । ॐ उमामहेश्वराभ्यां नमः इति नाममंत्रेण पुरुषसूक्तेन च वा रुद्राध्यायेन षोडशोपचारैः संपूज्य कदलीपूजां कुर्यात् । तद्यथा । ॐ कदल्यै कामदायिन्यै मेधायै ते नमोनमः । रंभायै भूतिसारायै सर्वसौख्यप्रदे नमः ॥ १ ॥ इति मंत्रेण कदलीमावाह्य तैलहरिद्रादिना मंगलस्नानं कारयित्वा स्त्रीवस्त्राभूषणैर्भूषयित्वा पुरतः आदर्शं चामरं छत्रं च धृत्वा उपरि पूरिकाबंधनमिक्षुदंडवेष्टनं च कृत्वा कदल्याश्चतुर्दिक्षु गुडाचलं जीरकं लवणं शुभ्राक्षतांश्च संस्थाप्य । ॐ कदल्यै नमः इति नाममंत्रेण षोडशोपचारैः संपूज्य उत्तमोदकेन सिंचेत् ।

व्र०
॥१०२॥

तत्र मंत्रः । यथा रंभे विवृद्धिस्तु शाखादीनां सदा भवेत् । तथा वर्द्धय मां देवि सेचनात्पार्वती प्रिये ॥ १ ॥ ततः प्रार्थना । यथायथा हि कदलि प्रसवो वर्द्धते तव । तथा मनोरथानां मे प्रभवो भवतु स्वयम् ॥ १ ॥ इति प्रार्थ्य । पुराणश्रवणादिना रात्रौ जागरणं कुर्यात् ॥ ततः प्रातरग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते प्रधानदेवशिवगौरीकदलीभ्यः पलाशसमिन्मधुसर्पि स्तिलव्रीहिद्रव्यैः प्रत्येकमष्टोत्तरशतं जुहुयात् । तत्र क्रमेण होममंत्राः । ॐ त्र्यंबकंयजामहे० १ गौरीर्मिमाय० २ ॐ आं ह्रीं क्लीं कामिन्यै विद्महे त्रैलोक्यक्षोभिण्यै धीमहि । तन्नः कदली प्रचोदयात् स्वाहा ३ ततः सर्वतोभद्रमंडलदेवताभ्यो नाममंत्रैः पृथक्पृथगाज्याहुतीर्हुत्वा होमशेषं समाप्य उत्तरपूजां च कृत्वा प्रार्थयेत् । उमे गौरि नमस्तुभ्यं नमस्ते विश्वधारिणि । परमानंदरूपिण्यै कदल्यै ते नमोनमः ॥ १ ॥ ततः षोडशाष्टौ यथाशक्ति वा मिथुनानि वस्त्रादिना संपूज्य वंशपात्रस्थ सौभाग्यद्रव्ययुतं फलदक्षिणासहितं वायनं दद्यात् । ततः आचार्यं संपूज्य सोपस्करं पीठं कदलीं च दद्यात् । तत्र मंत्रः । कदलीं कामदात्रीं च सर्वसौख्यप्रदायिनीम् । गिरिजाहररूपां वै ब्राह्मणाय ददाम्यहम् ॥ १ ॥ प्रतिगृह्ण द्विजश्रेष्ठ समस्तफलदायक । कदल्याश्च प्रदानेन पूर्णाः संतु मनोर

थाः ॥ २ ॥ कदली प्रतिगृह्णाति कदली वै ददाति च । कदली तारका चैव कदल्यै ते नमो
नमः ॥ ३ ॥ इति प्रार्थ्य । कदलीदानसांगतासिद्ध्यर्थं हिरण्यं दक्षिणात्वेन दत्त्वा कर्मपूर्तये सोप
स्करां सवत्सां गां च दद्यात् । ततोऽन्यानपि ब्राह्मणान् पादुकोपानच्छत्रालंकारदक्षिणाभिः प्रतो
ष्य तदन्नेन यथाशक्ति ब्राह्मणान् भोजयित्वा आशिषो गृहीत्वा वाग्यतो बंधुभिः सह स्वयं भुंजीत ।
एवं नारी नरो वापि यः कुर्यात्कदलीव्रतम् । सर्वान्कामानवाप्नोति स्वर्गलोके महीयते ॥ १ ॥
इति भविष्योत्तरोक्तं कदलीव्रतोद्यापनम् । अथ वैकुंठचतुर्दशीव्रतोद्यापनम् ॥ तच्च कार्तिकशुक्ल
चतुर्दश्यामरुणोदयव्यापिन्यां कार्यम् । देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकशिवपदप्राप्तिका
मनयाऽऽचरितवैकुण्ठचतुर्दशीव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं कर्म कुर्यात् ।
ततो लिंगतोभद्रे ताम्रकलशोपरि सुवर्णमयं विश्वेश्वरं वामे सौवर्णीं गौरीं पुरतो राजतं वृषभं च
संस्थाप्य पुरुषसूक्तेन रुद्राध्यायेन वा षोडशोपचारैः सहस्रकमलैश्च संपूज्य अपराधान् क्षमाप्य
प्रदक्षिणात्रयं कृत्वा साष्टांगं प्रणम्य कथाश्रवणादिना रात्रिं निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य
आज्यभागांते घृताक्ततिलैरष्टोत्तरशतम् ॐ नमः शिवाय इति मंत्रेण हुत्वा लिंगतोभद्रदेवताभ्यश्चैकै

काज्याहुतिंहुत्वा होमशेषं समापयेत् । तत आचार्यं संपूज्य सोपस्करं पीठं व्रतपूर्तये सवत्सां धेनुं च दत्वा यथाशक्ति ब्राह्मणान् परमान्नेन भोजयेत् ॥ इति सनत्कुमारसंहितोक्तं वैकुंठचतुर्दशीव्रतोद्यापनम् ॥ ॥ अथ शिवरात्रिव्रतोद्यापनम् ॥ तच्च फाल्गुनकृष्णचतुर्दश्यामर्द्धरात्रव्यापिन्यां कार्यम् तत्र प्रयोगः । त्रयोदश्यामेकभक्तं कृत्वा चतुर्दश्यां प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा संभारान् संपाद्य मंडपं कुर्यात् । ततो मंडपमध्ये शुद्धमृदा वेदिं कृत्वा तत्र द्वादशलिंगतोभद्रम् अथवा सर्वतोभद्रं विलिख्य स्वासने उदङ्मुखः प्राङ्मुखो वा उपविश्य पवित्रपाणिः रुद्राक्ष भस्मधारणं कृत्वा आचम्य प्राणानायम्म संकल्पं कुर्यात् । देशकालौ संकीर्त्य । ममात्मनः सर्वपापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्वर्गफलसिद्धिद्वारा श्रीभगवानीशंकरप्रीतये आचरितशिवरात्रिव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत् कर्म कृत्वा चतुर्दशर्त्विजो वृणुयात् ॥ ततो लिंगतोभद्रे ब्रह्मादिदेवता आवाह्य संपूज्य मध्ये ताम्रकलशं यथाविधि संस्थाप्य तस्य परितः पूर्वादिषु चतुर्षु दिक्षु द्वादशलिंगेषु द्वादशकलशान् द्वौ मध्यकलशादुत्तरदक्षिणयोश्च स्थापयेत् । एवं चतुर्दशकलशान् मध्ये चैकं संस्थाप्य तेषामुपरि तंडुलपूर्णपात्राणि निधाय तत्र

मध्यकलशे सौवर्णीमुमामहेश्वरमूर्त्तिं तत्पुरतो राजतं वृषभं च प्रतिष्ठाप्य परितो द्वादशकलशेषु मध्यकलशयोश्च चतुर्दशलिंगानि अभावे स्वर्णप्रतिमाश्च स्थापयेत् । ततो मध्ये ॐ त्र्यंबकंयजामहे सुगंधिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ ॐ नमः शंभवायचमयो भवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतराच ॥ २ ॥ इति मंत्राभ्यामुमामहेश्वरमावाह्य पूर्वादिकलशस्थलिंगेषु क्रमेण नाममंत्रेणावाहयेत् । तत्र मंत्रः । ॐ अजैकपदे नमः १ अहिर्बुध्न्याय नमः २ भवाय नमः ३ शर्वाय नमः ४ उमापतये० ५ रुद्राय० ६ पशुपतये० ७ शंभवे० ८ वरदाय० ९ शिवाय० १० ईश्वराय० ११ महादेवाय० १२ हराय नमः १३ भीमाय नमः १४ इति चतुर्दशनामभिः शिवमावाहयेत् । ततः पूर्वे ॐ नंदीमहाकालाभ्यां नमः १ दक्षिणे श्रृंगिभृंगिभ्यां नमः २ पश्चिमे वृषस्कंदाभ्यां नमः ३ उत्तरे देशकालाभ्यां नमः ४ पार्श्वे गंगायमुनाभ्यां नमः । इति सगणं शिवमावाह्य पुरुषसूक्तेन रुद्राध्यायेन वा ॐ सगणाय महेश्वराय नमः । इति रुद्राभिषेकपूर्वकं पत्रपुष्पांतपूजां कृत्वा अंगपूजामावरणपूजां च कुर्यात् । पुष्पाण्यादाय ॐ शर्वाय नमः पादौ पूजयामि १ पशुपतये० जरू

व्र० ॥१०५॥

पू० २ रुद्राय० कटी पू० ३ ईश्वराय० बाहू पू० ४ सद्योजाताय० कंठं पू० ५ शंभवे० मुखं पू०६वामदेवाय० जक्षुषी पू० ७ भीमाय० भ्रुवौ पू० ८ उमापतये० ललाटं पू० ९ सर्वव्यापिने नमः मूर्द्धानं पूजयामि १० इत्यंगपूजा । अथावरणपूजा । ऐशान्यां पूर्वादीदिक्षु च ईशानाय नमः १ तत्पुरुषाय नमः २ अघोराय नमः ३ वामदेवाय० ४ सद्योजाताय० ५ ( पुनः ईशानादिषु ) ॐ निवृत्त्यै नमः१प्रतिष्ठायै० २ विद्यायै० ३ शांत्यै नमः ४ शांत्यतीतायै० ५ इति कलाः पूजयेत् । पुनः पूर्वादिदिक्षु ॐ सूर्याय नमः १ इंदवे नमः २ क्षित्यै० ३ तोयाय० ४ अग्नये० ५ पवनाय० ६ आकाशाय० ७ यज्वने नमः ८ इत्यष्टमूर्तीः पूजयेत् । ( पुनः पूर्वादिषु ) अनंताय नमः १ सूक्ष्माय० २ शिवोत्तमाय० ३ एकनेत्राय० ४ एकरुद्राय० ५ त्रिमूर्त्तये० ६ श्रीकंठाय० ७ शिखंडिने० ८ पुनरुत्तरादिक्रमेण ॐ उमायै नमः १ चंडेश्वराय० २ नंदिने० ३ महाकालाय० गणेशाय० ५ वृषभाय० ५ भृंगरिटये० ७ स्कंदाय० ८ इति गणान् पूजयेत् । पुनः पूर्वादिषु । ॐ इंद्राय नमः १ अग्नये० २ यमाय० ३ निर्ऋतये० ४ वरुणाय० ५ वायवे० ६ कुबेराय० ७ ईशानाय० ८ ब्रह्मणे० ९ अनंताय० १० ( तद्बाह्ये तत्तत्समीपे ) वज्राय नमः १ शक्तये २ दंडाय० ३ खड्गाय० ४ पाशाय० ५ अंकुशाय० ६ गदायै० ७ त्रिशूलाय० ८

पद्माय० ९ चक्राय नमः १० इत्यावरणपूजां कृत्वा धूपदीपनानाविधनैवेद्यतांबूलपूगीफलर्तुफल
दक्षिणादिभिः षोडशोपचारैः संपूज्य कर्पूरगर्भितबहुवर्तिभिर्नीराजयित्वा प्रदक्षिणात्रयं विधाय
साष्टाङ्गं प्रणम्य अर्घ्यं दद्यात् । तत्र मंत्रः । नमः शिवाय शांताय सर्वपापहराय च । शिवरात्रौ
मया दत्तं गृहाणार्घ्यं प्रसीद मे ॥ १ ॥ ततः प्रार्थना । नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां
गृहाण मद्दत्तां महेश प्रथमे पदे ॥ १ ॥ इति प्रथमप्रहरपूजनम् । एवमेव प्रतियामं पूजा कार्या । अर्घ्येषु
विशेषः । तद्यथा । मया कृतान्यनेकानि पापानि हर शंकर । गृहाणार्घ्यमुमाकान्त शिवरात्रौ
प्रसीद मे ॥ १ ॥ नमोऽव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरांत । पूजांक गृहाण देवेश यथाशक्त्योपपा
दिताम् ॥ २ ॥ इति द्वितीये प्रहरे । दुःखदारिद्र्यभावैश्च दग्धोहं पार्वतीपते । मां वै त्राहि महादेव
गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ बद्धोहं विविधैः पाशैः संसारभयबंधनैः । पतितं मोहजाले मां त्वं
समुद्धर शंकर ॥ २ ॥ इति तृतीये० । किं जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले
देव दास्यं देहि जगत्पते ॥ १ ॥ नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां गृहाण मद्दत्तां शिवरात्रौ
प्रसीद मे ॥ २ ॥ इति चतुर्थे प्रहरे पूजां कुर्यात् ( अन्यत्सर्वं पूर्ववत् ) एवं संपूज्य नृत्यगीतवाद्य

व्र० ॥१०६॥

पुराणपठनादिना रात्रिं निनयेत् । ततः प्रभाते स्नात्वा संध्यादिनित्यक्रियां समाप्य पुनः पूर्ववत् सांगं महेशं संपूज्य । स्थंडिले अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते तिलव्रीहिय वशर्कराघृतविल्वपत्रदूर्तापायसद्रव्यैः । ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबंधना न्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ १ ॐ नमः शंभवायचमयोभवायचनमः शंकरायचमयस्करायच नमः शिवायचशिवतरायचस्वाहा ॥ २ ॥ इदं शिवाय १० इति मंत्राभ्यामष्टोत्तरशते हुत्व तैरेव द्रव्यैः । ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी । अष्टापदीवभूवुषी सहस्राक्षरापरमेव्योमन्त्स्वाहा १०८ ( ऋ० २ । ३ २२ ) इति मंत्रेणापि गौर्य्यै अष्टोत्तरशतहोमं कुर्यात् । ततो विल्वपत्रैः ॐ अजैकपदे स्वाहा १ अहिर्बुध्न्याय० २ भावाय० ३ शर्वाय० ५ उमाप तये० ५ रुद्राय० ६ पशुपतये० ७ शंभवे० वरदाय० ९ शिवाय० १० ईश्वराय० ११ महादेवाय० ११ हराय० १३ भीमाय स्वाहा १४ इति चतुर्दशनामभिर्जुहुयात् । ततः पूर्वोक्तावरणदेवताभ्यो लिंगतो भद्रदेवताभ्यश्चैकैकयाज्याहुत्य हुत्वा होमशेषं समाप्य आचार्यं वस्त्रालंकारभूषणैः संपूज्य सोप स्करां प्रतिमां दद्यात । तत्र मंत्रः । शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तव रूपप्रदानेन मम

संतु मनोरथाः ॥ १ ॥ ततो व्रतपूर्तये सवत्सां गामाचार्याय दत्त्वा अन्यपि चतुर्दशविप्रांश्चतुर्दश नामभिः संपूज्य तेभ्यो जलपूरितचतुर्दशकलशान्वस्त्रप्रतिमायज्ञोपवीतदक्षिणासहितान्दद्यात् । ततः शक्तौ सत्यां द्वादश गाः सोपस्करां शय्यां परिधानादिकं च दत्त्वा चतुर्दश यथाशक्ति वा ब्राह्मणान् परमान्नेन साज्येन भोजयित्वा दक्षिणाभिः प्रतोष्य । व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव च । सर्वं संपूर्णतां यातु प्रसादाद्भवता मम ॥ १ ॥ इति संप्रार्थ्य पुनःपुनः प्रणम्य स्वजनैः सह स्वयं भुंजीत । इति कालोत्तरनिबंधोक्तं वार्षिकशिवरात्रिव्रतोद्यापनम् । एवमेव माशिकशिवरात्रिव्रतोद्यापनं ज्ञेयम् । इति पंडितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे चतुर्दशीव्रतोद्यापनानि ॥ १४ ॥

अथ पूर्णिमाव्रतोद्यापनानि लिख्यन्ते ॥ तत्रादौ ( दक्षिणदेशप्रसिद्धं ) कोकिलाव्रतोद्यापनम् । तच्च यस्मिन्वर्षे आषाढद्वयं तदा शुद्धाऽषाढपूर्णिमायां व्रतग्रहणम् । श्रावणपूर्णिमायां समापनम् ( अशक्तेन दिनाष्टकं त्रिदिनं वा कार्यम् ) एवं मासपर्यंतं कृत्वा अंते पूर्णिमायामुद्यापनं कुर्यात् । तत्र प्रयोगः । देशकालौ स्मृत्वा ममेहजन्मनि जन्मांतरे च सर्वपापक्षयपूर्वकं पुत्रपौत्राऽवैधव्यनिःशापत्न्यलक्ष्मीसौभाग्यरूपलावण्याद्यभिवृद्धिद्वारा श्रीगौरीरूपकोकिलाप्रीत्यर्थमाचरितकोकिलाव्रतोद्यापनं

करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः एकतो भद्रे ब्रह्मादि देवताः संपूज्य तन्मध्ये ताम्रकलशं कृष्णवस्त्रवेष्टितं संस्थाप्य । तदुपरि एकविंषतिवंधात्मकतिल पूर्णवंशपात्रं निधाय तत्र सौवर्णीं रौप्यापादां मौक्तिकनेत्रां प्रवालमुखीं पंचरत्नपृष्ठीं राजताम्रवृक्षस्थां पक्षिरूपिणीं कोकिलाम् ॐ गौरीर्मिमाय० इति मंत्रेण प्रतिष्ठापयेत् । ततः श्रीसूक्तेन नाममंत्रेण वा षोडषोपचारैः संपूजांते अंगपूजां कुर्यात् । ॐ शिवायै नमः शिरः पूजयामि १ वनवासिन्यै० ललाटं पू० २ सुरूपायै० भ्रूवमध्यं पू० ३ पार्वत्यै० चंचुं पू० ४ तिर्यग्रूपधारिण्य० कंठं पू० ५कोकिलायै० हृदयं० ६ पक्षिरूपिण्यै० गुह्यं० ७ पद्मवत्यै० पादौ० ८ कृष्णवर्णायै० सर्वांगं पूजयामि ९ हत्यंग पूजा । एवं संपूज्य अर्घ्यं दद्यात् । तिलस्नेहे तिलमुखे तिलसौख्ये तिलप्रिये । सौभाग्यं धनपुत्रांश्च देहि मे कोकिले नमः ॥ १ ॥ अर्घ्यं गृहाण देवेशि वाञ्छितार्थप्रदायिनि । आषाढस्याऽसिते पक्षे मेघवर्णे हरप्रिये ॥ कोकिले त्वं जगन्मातर्गृहाणार्घ्यं नमोस्तु ते ॥ २ ॥ ततः प्रार्थना ॥ कोकिले कृष्णवर्णे त्वं सदा वससि कानने । भवान्यै हरकांतायै कोकिलायै नमोनमः ॥ १ ॥ रूपं देहि जयं देहि सौभाग्यं देहि मे सदा । पुत्रान्देहि धनं देहि सर्वान्कामान्कुरुष्व मे ॥ २ ॥ काकवंध्या

विवत्सा च मृतवंध्या च दुःखदा । तास्तु वैफल्यतां यांतु कोकिले त्वत्प्रसादतः ॥ ३ ॥ त्वया लब्धः पितुर्लोके शंकरो लोकशंकरः । अतोहं त्वत्प्रसादेन लभेयं पतिमुत्तमम् ॥ ४ ॥ ततो गुडमिश्रिततिलानां वायनं दद्यात् । तिलगुडमिश्रितपक्वान्ननैवेद्यम् । प्रदोषकाले पूजा । स्वयं तिलगुडभक्षणं हविष्याशनं वा कुर्यात् । रात्रौ जागरणं कार्यम् । प्रातरग्नि प्रतिष्ठाप्य आज्यभागांते । ॐ गौरीर्मिमाय० इति मंत्रेण । ॐ कोकिलायै स्वाहा १०८ इति नाममंत्रेण वा तिलचंपकपुष्पतंडुलपायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतं हुत्वा व्याहृतिमंत्रेण बिल्वपत्रैरष्टोत्तरशतं जुहुयात् । ततो मंडलदेवताभ्यश्चैकैकाज्याहुतीर्दत्त्वा होमशेषं समाप्य पंच मिथुनानि द्वयं वा पूजयेत् । तेभ्यो गुडतिलमिश्रितपक्वान्नपूरितकरयुतं सौभाग्यद्रव्यदक्षिणान्वितं वंशपात्रस्थं कृष्णवस्त्रवेष्टितं वायनं दद्यात् । तत्र मंत्रः । सोपस्करं द्विजश्रेष्ठ वायनं व्रतपूर्तये । ददामि ते गृहाणेदं कोकिला प्रीयतामिति ॥ १ ॥ ततो विसर्जनम् । देवि चैत्ररथोत्पन्ने विंध्यपर्वत वासिनि । अर्चिता पूजिताऽसि त्वं कोकिले हरवल्लभे ॥ १ ॥ कोकिले कलकंठासि माधवे मधुरस्वरे । वसंते वससे देवि गच्छ त्वं नंदनं वनम् ॥ २ ॥ ततः पीठं व्रतपूर्त्तये गां च आचा

र्थाय दत्त्वा ब्राह्मणान्भोजयित्वा वस्त्रादिभिस्तान्प्रतोष्य आशिषो गृहीत्वा स्वयं भुंजीत । इति कोकिलाव्रतोद्यापनम् ॥ अथ उमामहेश्वरव्रतोद्यापनम् ॥ तच्च भाद्रपदशुक्लपूर्णिमायां कार्यम् । ( एतद्व्रतं कर्णाटकदेशे प्रसिद्धम् ) शिवरहस्ये । तत्र पूर्वेद्युः सायं शिवं संपूज्य हविष्याशी शिवध्यानपरो देवसन्निधौ निद्रां कुर्यात् । ततः प्रातर्नद्यादौ स्नात्वा संध्यादिनित्यकर्म समाप्य भस्मोद्धूलितसर्वांगो रुद्राक्षधारणं च कृत्वा । देशकालौ संकीर्त्य ॥ मम इह जन्मनि जन्मांतरे च कृतसमस्तपापक्षयार्थं दुःखदारिद्र्यनाशपूर्वकशिवपदप्राप्तिकामनया आचरितोमामहेश्वरव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कर्म पूर्ववत् कृत्वा पंचदश शिवभक्तान् द्विजान्निमंत्रयेत् । ततश्चतुर्द्वारोपशोभिते मण्डपे भद्रपीठे लिंगतोभद्रं रचयित्वा तत्रस्थदेवताः संपूज्य तन्मध्ये यथाविधि ताम्रकलशं संस्थाप्य तत्र पूर्णपात्रे प्रतिसरग्रंथिकुशं गव्याक्तं कुंकुमाक्तं पंचदशग्रंथियुतं दोरकं निधाय तत्र सौवर्णं राजतं वा पलादधिकमुमामहेश्वरयोः प्रतिमाद्वयं त्र्यंबकमिति मंत्रेण १ गौरीर्मिमाय० १ इति मंत्रेण च प्रतिष्ठाप्य तत्पीठपरितः पीठेषु पंचदश कुंभान्वस्त्रयुग्मवेष्टितान्संस्थापयेत् ॥ एवं प्रतिष्ठाप्य विध्युक्तप्रकारेण पूजयेत् । तत्रादौ ध्यानम् ।

पंचाननमुमाकांतमनलेन्दुरविप्रभम् । चंद्रार्द्धशेखरं नित्यं जटामुकुटमण्डितम् ॥ १ ॥ भस्मोद्धूलितसर्वांगं रुद्राक्षाभरणान्वितम् । ऋतं सत्यं परं ब्रह्म विष्णुब्रह्मादिवंदितम् ॥ विश्वं विश्वेश्वरं देवं ध्यायामि परमेश्वरम् ॥ २ ॥ एवं शिवं ध्यात्वा उमां ध्यायेत् । ध्यायामि परमां गौरीमादिविद्यां सुरेश्वरीम् । लक्ष्मीसेवितपादाब्जां चंद्रार्द्धकृतशेखराम् ॥ १ ॥ ब्रह्मेंद्रोपेन्द्रजननीं महेशार्द्धांगगामिनीम् । प्रसन्नवदनां शांतां ध्यायेद्देवीमुमां सतीम् ॥ २ ॥ इति ध्यात्वा महेशं पुरुषसूक्तेन रुद्राध्यायोक्तषोडशमंत्रैर्वा सद्योजातमित्यादिपंचब्रह्ममंत्रैर्वा पंचामृतादियुक्तैः षोडशोपचारैरखंडितबिल्वपत्राद्यैश्च संपूज्य । श्रीसूक्तेन गौरीं च पूजयेत् । पुष्पोत्तरमंगपूजा पुष्पैः कार्या । तद्यथा ।ॐकपर्दिने नमः कपर्दं पूजयामि १ भाललोचनाय० भालं पू० २ सोमसूर्याग्निलोचनाय० नेत्रत्रयं पू० ३ श्रुतिश्रोत्राय० श्रोत्रे पू० ४ घ्राणगंधाय० घ्राणं पू० ५ स्मृतिदंताय० दंतान् पू० ६ श्रुतजिह्वाय० जिह्वां पू० ७ सुकपोलाय० कपोलौ० ८ ज्ञानोष्ठाय० ओष्ठौ० ९ नीलकंठाय० कंठं० १० भूरिवक्षसे० वक्षः पू० ११ हिरण्यबाहवे० बाहू० १२ विश्वोदराय० उदरं० १३ विश्वोरवे० ऊरू० पू० १४ विश्वजंघाय० जंघे० १५ विश्वपादाय० पादौ० १६ विश्वनखाय० नखान् पू० १७ सर्वात्मकाय० सर्वांगं पूजयामि १८ । इति

प्र०

॥१०९॥

शिवांगपूजा । अथ शक्त्यंगपूजा । शिवायै० शिरः पू० १ पृथुवेण्यै० वेणीं० पू० सीमंतराजितायै० सीमंत० ३ कुंकुमभालायै० भालं० ४ सोमसूर्याग्निलोचनायै० नेत्रे० ५ श्रुतिश्रोत्रायै० श्रोत्रे० ६ गंधप्रियायै० घ्राणं० ७ सुभगकपोलायै० कपोलौ० ८ कुड्मलदंतायै० दंतान्० ९ विद्याजिह्वायै० जिह्वां० १० बिंबोष्ठायै० ओष्ठौ० ११ वृत्तकंठायै कंठ० १२ पृथुलकुचायै० कुचौ० १३ विश्वगर्भायै० उदरं १४ शुभकट्यै० कटी पू० १५ दिव्योरुदेशायै० ऊरू० १६ वृत्तजंघायै० १६ जंघे पू० १७ लक्ष्मीसेवितपादुकायै० पादौ पू० १८ महेश्वरप्रियायै० नखान् पू० १९ शोभनविग्रहायै० सर्वांगं पू० २० । एवमंगपूजां कृत्वा दोरकं पूजयेत् । प्रथमग्रंथिमारभ्य दोरकग्रंथिषु बिल्वपत्रादिभिः ॐ नमः ससोमाय० इति मंत्रेण पूजां कृत्वा कुंकुमादिना अंकयित्वा पंचदशप्रस्थगोधूमांस्तंडुलांश्च उपायनार्थं निवेद्य गोघृतपाचितपंचदशगोधूमापूपानां वा मंडकानां वायनं दक्षिणासहितं स्थापयेत् । ततः पुराणपठनादिना रात्रौ जागरणं कृत्वा प्रातः पुनः पूर्ववत्संपूज्य ऋत्विक्सहितो मुख्याचार्यः अग्निं प्रतिष्ठाप्य । आज्यभागांते त्र्यंबकमंत्रेण ॐ गौरीर्मिमाय० इति मंत्रेण च अथवा ॐ उमामहेश्वराय नमःस्वाहा इति नाममंत्रेण ॐ नमः सोमायेति मंत्रेण वा पञ्चविंशतिसहस्रं पंचदशसहस्रं वा

पंचदशशतानि वा घृताक्तपायसद्रव्येण हुत्वा लिंगतोभद्रदेवताभ्यश्चैवकैकाज्याहुत्या हुत्वा होमशेषं समाप्य आचार्यादिब्राह्मणान् बिल्वपत्रपुष्पमालाभस्मादिभिर्नानावस्त्रादिभिश्च संपूज्य वायनानि कलशांश्च तेभ्यो दद्यात् । तत्र मंत्रः । उमेशः प्रतिगृह्णाति उमेशो वै ददाति च । उमेशस्तारकोभाभ्यामुमेशाय नमोनमः ॥ १ ॥ ततः आचार्याय सोपस्करं प्रतिमाद्वयं सुवर्णदक्षिणां च यथाक्तिदत्वा व्रतपूर्त्तये पंचदश गास्तन्मूल्यं वा दत्वा अन्यान् द्विजान् सुवासिनीश्च संपूज्य देवं प्रार्थयेत् उद्यापनं कृतं संभो मयैतदधुना प्रभो । इदं संपूर्णतां यातु त्वत्प्रसादान्महेश्वर ॥ १ ॥ मंत्रहीनं भक्तिहीनं च यत्कृतम् । सांगं भवतु तत्सर्वं तवैव स्मरणात्प्रभो ॥ २ ॥ ततः शैवान् विप्रान् भोजयित्वा तैराशिषो गृहीत्वा वाग्यत इष्टजनैः सह भुंजीत । एवं यः कुरुते सम्यगुमामहेश्वरव्रतम् । स सर्वभोगान्भुक्त्वांते मोक्षमाप्नोति सर्वथा ॥ १ ॥ इति शिवरहस्योक्तमुमामहेश्वरव्रतोद्यापनम् ॥ अथ द्वात्रिंशत्पूर्णिमा ( बत्तीशीपूर्णिमा ) व्रतोद्यापनं लिख्यते ॥ भविष्ये । पूर्णिमा मार्गशीर्षस्य माघवैशाखयोस्तथा । व्रतं प्रारंभयेत्तस्यां पौषं भाद्रं तु वर्जयेत् ॥ १ ॥ उमया सहितो देवः पूजनीयो वृषध्वजः । उपचारैः षोडशभिरागमोक्तविधानतः ॥ २ ॥ एकैकं

दीपकं कृत्वा मासिमासि च दापयेत् । एवं सार्द्धद्वयं वर्षं द्विमासाधिकमाचरेत् ॥ ३ ॥ ज्येष्ठस्य पूर्णिमायां च कुर्यादुद्यापनं बुधः । अथवा शुभमासस्य पूर्णिमायां समाचरेत् ॥ ४ ॥ चतुर्दश्यामुपवसेद्रात्रौ पूजनमारभेत् । अथ प्रयोगः । देशकालौ संकीर्त्य मम इह जन्मनि जन्मांतरे च वैधव्यनाशपुत्रपौत्रसौभाग्यादिप्राप्तिपूर्वकं भर्तुरायुर्वृद्धिद्वारा उमामहेश्वरप्रीत्यर्थमाचरितस्य द्वात्रिंशत्पूर्णिमाव्रतस्य पूर्णतासिद्धये तदुद्यापनाख्यं कर्म करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कृत्वा लिंगतोभद्रमध्यस्थताम्रकलशे हैमम् उमामहेश्वरप्रतिमाद्वयं तत्पुरतो राजतं वृषभं च संस्थाप्य । पुरुषसूक्तेन वा त्र्यंबकमंत्रेण नाममंत्रेण वा षोडशोपचारैः पचामृतनानाविधनैवेद्यैश्च संपूज्य कथाश्रवणादिना रात्रौ जगरणं कुर्यात् । ततः प्रातः पुनः पूर्ववत्संपूज्य अग्निं प्रतिष्ठाप्य आज्यभागांते ॐ नमः शिवाय स्वाहा इति मंत्रेण ॐ उमायै स्वाहा इति मंत्रेण च यवतिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतं हुत्वा लिंगतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं जुहुयात् । ततो होमशेषं समाप्य आचार्यादीन्वस्त्रादिभिः संपूज्य वायनं दद्यात् । तद्यथा । द्वात्रिंशद्बंधनयुतवंशपात्रे व्रीह्युपरिस्थे द्वात्रिंशन्महादीपान् द्वात्रिंशदृतुकालोद्भवनानाफलावस्त्रदक्षिणायुतांश्च कृत्वा दद्यात् । तत्र

मंत्रः । द्वात्रिंशद्भिः फलैर्युक्तं सदीपं वस्त्रवेष्टितम् । वाणकं तव तुष्ट्यर्थं ददामि गिरिजापते ॥ १ ॥
( प्रतिग्रहमंत्रः ) महेशः प्रतिगृह्णाति महेशो वै ददातिच । महेशस्तारकोभाभ्यां महेशाय नमो
नमः ॥ १ ॥ ततो द्वात्रिंशद्ब्राह्मणान् सपत्नीकान् षड्रसैः सह भोजयित्वा व्रतपूर्त्तये आचार्याय
पुंवत्सेन युतां धेनुं दत्त्वा बंधुभिः सह स्वयं भुंजीत । इत्येतत्कथितं सर्वं व्रतस्योद्यापनं मया । याः
कुर्वंति व्रतमिदं विधवा न भवंति ताः ॥ १ ॥ इह भुक्त्वा तु विपुलान्कामान्सर्वान्मनोगतान् ।
स्वर्गमंते गमिष्यन्ति कुलकोटिशतैरपि ॥ २ ॥ इति द्वात्रिंशीपूर्णिमाव्रतोद्यापनम् ॥ अथ सत्यनारा
यणव्रतोद्यापनं लिख्यते ॥ तच्च शुक्रास्तादिरहिते यस्मिन्कस्मिन् शुद्धमासे पूर्णिमायां कार्यम् । अत्र
पूर्णिमा प्रदोषव्यापिनी ग्राह्या । यजेच्चैव निशामुखे इति वाक्यात् । अथ प्रयोगः । पूर्णिमायां प्रात
रुत्थाय दंतधावनपूर्वकं नद्यादौ यथाविधि स्नात्वा संध्यादिनित्यक्रियां संपाद्य गोमयोपलिप्ते
शुद्धदेशे कदलीस्तंभादिभिः सुशोभितं चतुर्द्वारं पंचभिः कलशैर्जुष्टं ध्वजतोरणान्वितं मंडपं
कृत्वा तन्मध्ये वेदिकायां सर्वतोभद्रमण्डलं विलिखेत् । ततः प्रदोषे पुनः स्नात्वा धौतशुक्ल
वाससी परिधाय कृतचंदनादितिलकः सपवित्रकरः सायंसंध्यां कृत्वा वेद्याः पश्चिमतः स्वासने

ब्र० ॥१११॥

यजमानः सपत्नीकः प्राङ्मुख उपविश्य आचम्य प्राणानायम्य । ताम्रपात्रे जलतिलाक्षतपुष्पफलदूर्वाद्रव्याणि गृहीत्वा देशकालौ संकीर्त्य मम आत्मनः इह जन्मनि जन्मांतरे च कृतसमस्तपापक्षयार्थं धर्मार्थकाममोक्षचतुर्वर्गप्राप्तिद्वारा ( कलिकल्मषनाशपूर्वकं ) श्रीसत्यनारायणप्रीतये अमुककामनया वा आचरितसत्यनारायणव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनं पुण्याहवाचनम् आचार्यादिवरणं च पूर्ववत्कृत्वा आचार्याय वस्त्रद्वयं मुद्रिकाकमंडलुप्रभृतीनि च दद्यात् । ततः आचार्यः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तत्र मध्यकमले यथाविधि ताम्रकलशं संस्थाप्य तदुपरि तंडुलपूरितं ताम्रपूर्णपात्रं निधाय पट्टवस्त्रं प्रसार्य्य कुंकुमादिनाऽष्टदलं विलिख्य तन्मध्ये स्वर्णादिसिंहासने शालग्रामं कर्षपरिमितसुवर्णरचितां सत्यनारायणप्रतिमां च ॐ इदम्विष्णुर्विचक्रमे त्रेधानिदधेपदम् । समूढमस्यपा७ंसुरेस्वाहा ॥ इति मंत्रेण प्रतिष्ठापयेत् । अथ पूजनप्रकारः । तत्रादौ ध्यानम् ( तुलसीमंजरीं धृत्वा ध्यायेत्सत्यस्थितं हरिम् । ) नारायणं सांद्रघनावदातं चतुर्भुजं पीतमहार्हवाससम् ॥ प्रसन्नवक्त्रं नवकंजलोचनं सनंदनाद्यैरुपसेवितं भजे ॥ १ ॥ इति ध्यात्वा । करोमि ते व्रतं देव सायंकाले त्वदर्चनम् । श्रुत्वा गाथां त्वदीयां हि प्रसादं ते भजाम्यहम् ॥ १ ॥ इति

मनसा प्रार्थ्य पुरुषसूक्तेन ॐ नमो भगवते नित्यं सत्यदेवाय धीमहि । चतुःपदार्थदात्रे च नमस्तुभ्यं नमोनमः ॥ १ ॥ इति मंत्रेण च पंचामृतादिसहितैः षोडशोपचारैः संपूजयेत् । नैवेद्यं तु प्रस्थादिमानेन सपादं गोधूमचूर्णं गोघृतक्षीरशर्करादियुतं नानाभक्ष्यभोज्ययथादेशकालोद्भवरंभाफलादिसहितम् अभावे शालिचूर्णं गुडं शर्करां वा समर्पयेत् । एवं संपूज्य प्रार्थनां कुर्यात् । नवांभोजनेत्रं रमाकेलिपात्रं चतुर्बाहुचामीकरं चारुगात्रम् । जगत्त्राणहेतुं रिपौ धूमकेतुं सदा सत्यनारायणं स्तौमि नित्यम् ॥ १ ॥ इति प्रार्थ्य । पूजांते प्रसादभक्षणं कृत्वा नृत्यगीतवाद्यपुराणकथाश्रवणादिना रात्रौ जागरणं कुर्यात् । ततः प्रभाते स्नात्वा पुनः पूर्ववत्संपूज्य स्थंडिले अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आज्यभागांते तिलव्रीहियवशर्कराघृतपायसद्रव्यैरष्टोत्तरशतं जुहुयात् । तत्र मंत्रः । ॐ नमो भगवते नित्यं सत्यदेवाय धीमहि । चतुःपदार्थदात्रे च नमस्तुभ्यं नमोनमः स्वाहा ॥ १ ॥ इदं सत्यनारायणाय १०८ इत्यनेन हुत्वा पुरुषसूक्तेन प्रत्यृचमाज्यं जुहुयात् । ततः सर्वतोभद्रदेवताभ्यश्चैकैकया ज्याहुत्या हुत्वा होमशेषं समाप्य आचार्यं वस्त्रादिभिः संपूज्य सोपस्करां प्रतिमां व्रतपूर्त्तये सवत्सां गां च दद्यात् । शक्तौ सत्यां सोपस्कारां शय्यां पंचदशजलपूरितघटान्वस्त्रदक्षिणासहिता

प्र०
॥११२॥

न्दत्वा पंचदश ब्रह्मणान् यथाशक्ति वा गोधूमचूर्णकृतभक्ष्यभोज्यादिभिः पायसेन च भोजयेत् । ततो दक्षिणाभिस्तान् व्रतोष्य आशिषो गृहीत्वा स्वज्ञातिभ्यः कथाश्रोतृभ्यश्च भगवत्प्रसादं दत्वा बंधुभिः सह वाग्यतो भुंजीत ( उक्तं च भविष्यपुराणे ) तर्पणं मार्जनं कृत्वा कथां श्रुत्वा हरेरिमाम् । षडध्यायीं सत्यमुख्यां तत्पश्चात्तत्प्रसादकम् ॥ १ ॥ सम्यग्विभज्य तत्सर्वं दापयेच्छ्रोतृकान्नरान् । आचार्यायादिभागं च द्वितीयं स्वकुलाय सः ॥ २ ॥ श्रोतृभ्यश्च तृतीयं च चतुर्थं चात्महेतवे । विप्रेभ्यो भोजनं दत्वा स्वयं भुंजीत वाग्यतः ॥ ३ ॥ देवर्षेऽनेन विधिना सत्यनारायणार्चनम् । कारयेद्यदि भक्त्या च श्रद्धया च समन्वितः ॥ व्रती कामानवाप्नोति वांछितानीह जन्मनि ॥ ४ ॥ इति भविष्योक्तं सत्यनारायणव्रतोद्यापनं समाप्तम् ॥ अथ भीष्मपंचकव्रतोद्यापनम् ॥ एतद्व्रतं च कार्तिकशुक्लैकादशिमारभ्य पूर्णिमांतं पंचदिनात्मकं कार्यम् । ( व्रतविधानं तु व्रतराजादिषु लिखितमेव तत्र द्रष्टव्यम् ) अथोद्यापनप्रयोगः । पूर्णिमायां प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा गोमयोपलिप्ते शुद्धदेशे चतुर्द्वारोपशोभितं मण्डपं कृत्वा तत्र वेदिकायां सर्वतोभद्रं विलिखेत् । ततः सायंकाले पुनः स्नात्वा सायंसंध्यामुपास्य वेद्याः पश्चिमे स्वासने सपत्नीकः

प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा ममात्मनः अखिलपापक्षयपूर्वक धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरितभीष्मपंचकव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं कर्म कुर्यात् । ततः सर्वतोभद्रे देवताः संपूज्य मध्ये ताम्र कलशोपरि कर्षसुवर्णरचितां विष्णुप्रतिमाम् । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्य पाᳪसुरे ॥ इति मंत्रेण प्रतिष्ठाप्य । पुरुषसूक्तेन । ॐ नमो भवते वासुदेवाय इति द्वादशा अक्षरेण च षोडशोपचारैः संपूजयेत् । पुष्पजांते कमलैर्विष्णोः पादौ पूजयेत् १ बिल्वपत्रैर्जानुदेशं० २ शृंगार केण नाभिं० ३ बालबिल्वांकुरैः स्कंधौ० ४ मालतीपुष्पैः शिरश्च संपूजयेत् ५ । पुष्पाभावे तुलसी सर्वत्रार्पणीया । ततः कथाश्रवणादिना रात्रौ जागरणं कृत्वा प्रातः पुनः संपूज्य अग्निं प्रतिष्ठाप्य आज्यभागांते पुरुषसूक्तेन प्रत्यृचम् आज्यहोमं कृत्वा । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढस्यपाᳪसुरेस्वाहा । इदं विष्णवे इति मंत्रेणाष्टोत्तरशतमश्वत्थसमित्तिलपायसाज्यैर्जुहुयात् । अथवा ॐ नमो भगवते वासुदेवाय स्वाहा इति मंत्रेण जुहुयात् । ततस्तैरेव द्रव्यैः ॐ मत्स्याय स्वाहा इदं मत्स्याय १ कूर्माय स्वाहा इदं० २ वराहाय० ३ नारसिंहाय० इदं० ४ त्रिविक्रमाय०

व्र०
॥११३॥

इदं० ५ रामाय० इदं ६ श्रीरामाय० इदं० ७ कृष्णाय० इदं० ८ बुद्धाय० इदं० ९ कल्किने स्वाहा इदं० १० इति दशावतारेभ्यः प्रत्येकं हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं जुहुयात् । ततो होम शेषं समाप्य आचार्यं वस्त्राभूषणैः संपूज्य सोपस्करां प्रतिमां व्रतपूर्त्तये सवत्सां गां च दद्यात् । ततो यथाशक्ति पंच वा सपत्नीकान् ब्राह्मणान् षड्रसैर्भोजयित्वा तेभ्यो दक्षिणां दत्त्वा आशिषो गृहीत्वा बंधुभिः सह भुंजीत । एवं कृत्वा व्रतमिदं पवित्रं पापनाशनम् । पूर्वजन्मार्जितैः पापैरिहजन्मार्जितैरपि । आगामिजैश्च पापैस्तु मुच्यते नात्र संशयः ॥ १ ॥ इति पद्मपुराणोक्तं भीष्मपंचकव्रतोद्यापनम् ॥ इति पण्डितगौडश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे पूर्णिमाव्रतोद्यापनानि समाप्तानि ॥ अथ अमावास्याव्रतोद्यापनानि ॥ तत्रतावत् वटसावित्री ( बडसातैं ) व्रतोद्यापनं लिख्यते । एतद्व्रतं तु ज्येष्ठकृष्णत्रयोदशीमारभ्य अमावास्यांतं दिनत्रयात्मकं कार्यम् । उद्यापनं च अमावास्यायां कर्तव्यम् । ( उक्तं च निर्णयामृते भविष्ये च ) अमायां च तथा ज्येष्ठे वटमूले महासतीम् । त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् ॥ अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समुपोषणम् ॥ ( दाक्षिणात्यास्तु शुक्लपक्षे पूर्णिमांतं कुर्वंति तदपि स्कांदोक्तं

समीचीनम् ) अथोद्यापनप्रयोगः । तत्रादौ पूर्वोक्तं त्रिरात्रोपोषणं कृत्वा अमावास्यायां प्रातः तिला मलककल्केन केशान् संशोध्य सर्षपमृज्जलैर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा वटसमीपे गत्वा । देशकालौ संकीर्त्य । मम भर्तुः पुत्राणां चायुरारोग्यप्राप्तये जन्मजन्मनि अवैधव्यप्राप्तये च वट सावित्रीव्रतांगत्वेन वटपूजनं करिष्ये । इति संकल्प्य । वटमूले स्थितो वटमध्ये जनार्दनः । वटाग्रे तु शिवो देवः सावित्री वटसंश्रिता ॥ वट सिंचामि ते मूलं सलिलैरमृतोपमैः ॥ १ ॥ इति मंत्रेण बहूदकैः वटं सिंचेत् । ततः सूत्रेण वेष्टयित्वा । ॐ वटाय नमः । सावित्र्यै नमः । इति मंत्रेण गंध पुष्पाक्षतैः संपूज्य ॐ नमो वैवस्वताय इति मंत्रेण प्रदक्षिणां कृत्वा स्वगृहमागच्छेत् । ततो वट मूले गृहे वा मृदा वेदिं विधाय तत्र सर्वतोभद्रं विरच्य यथाचारं मण्डपं कृत्वा । आसने प्राङ्मुख उपविश्य आचम्य देशकालौ संकीर्त्य । मम भर्तुः पुत्रादीनां च आयुरारोग्यैश्वर्यादिप्राप्तिपूर्वकमिह जन्मनि जन्मान्तरे च आत्मनः अवैधव्यप्राप्तये आचरितवटसावित्रीव्रतोद्यापनं करिष्ये इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तत्र ताम्रकल शद्वयं यथाविधि प्रतिष्ठाप्य तत्रैकस्मिन्कलशे हैमं ब्रह्माणं तद्वामे हैमीं गायत्रीं सावित्रीं च

प्रतिष्ठापयेत् । तत्र ब्रह्मस्थापने ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः । सबुध्न्याऽउ पमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः । इति मंत्रः । गायत्रीसावित्रीस्थापने तु गायत्रीमंत्रो ज्ञेयः ॥ ततस्तदुत्तरे द्वितीयकलशे पलादधिकरजतस्य राजतपर्यंके सुवर्णमय्यः सत्यवत्–१ सावित्री २ यमराज ३ नारद ४–प्रतिमाश्चतस्रो नाममंत्रैः प्रतिष्ठाप्य तत्पुरतः काष्ठभारं सौवर्णं राजतं वा कुठारं निधाय तत्तन्नाममंत्रेणावाह्य षोडशोपचारैः पूजयेत् । नाममंत्राः । ॐ ब्रह्मणे नमः १ गायत्र्यै नमः २ सावित्र्यै नमः ३ सत्यवते नमः ४ सावित्र्यै नमः ५ यमाय नमः ६ नारदाय नमः ७ पुष्पपूजांते अंगपूजा कार्या । सावित्र्यै नमः पादौ पूजयामि १ सावित्र्यै नमः जानुनी पू० २ कमलपत्राक्ष्यै० कटी पू० ३ भूतधारिण्यै उदरं पू० ४ गायत्र्यै० कंठं पू० ५ ब्रह्मणः प्रियायै० शिरः पूजयामि ६ ( ततो ब्रह्मसत्यवतोः ) धात्रे नमः पादौ पूजायामि १ ज्येष्ठाय० ऊरू पू० २ परमेष्ठिने० मेढ्रं पू० ३ अग्निरूपाय० कटी पू० ४ वेधसे० उदरं० पद्मनाभाय० हृदयं ६ विधये० कंठं पू० ७ हेमगर्भाय० मुखं पू० ८ ब्रह्मणे० शिरः पूजयामि ९ विष्णवे नमः सर्वांगं पू० १० एवं संपूज्य रजतादिपात्रेण द्वयोरर्घ्यं दद्यात् । तत्र मंत्राः । ॐ कारपूर्विके देवि वीणापुस्त

कधारिणि । वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे ॥ १ ॥ पतिव्रते महाभागे वह्निजाते शुचि
स्मिते । दृढव्रते दृढमते भर्तुश्च प्रियवादिनि ॥ २ ॥ अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते ।
पुत्रपौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोनमः ॥ ३ ॥ ( अथ ब्रह्मसत्यवतोरर्घ्यमंत्रः ) त्वया सृष्टं
जगत्सर्वं सदेवासुरमानवम् । सत्यव्रतधरो देव ब्रह्मरूप नमोस्तु ते ॥ १ ॥ ( यमस्यार्घ्यमंत्रः ) त्वं
कर्मसाक्षी लोकानां शुभाशुभविवेककृत् । वैवस्वत गृहाणार्घ्यं धर्मराज नमोस्तु ते ॥ १ ॥
धर्मराजः पितृपतिः साक्षीभूतोसि जंतुषु । कालरूप गृहाणार्घ्यमवैधव्यं च देहि मे ॥ २ ॥ ( नार
दास्यार्घ्यमंत्रः ) नारदाय नमस्तुभ्यं सुरेशायभिवंदित । गृहाणार्घ्यं मया दत्तमवैधव्यं प्रयच्छ मे ॥१॥
एवमर्घ्यं दत्त्वा प्रार्थयेत् ( सावित्रीप्रार्थना ) सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी । तेन सत्येन
मां पाहि दुःखसंसारसागरात् ॥ १ ॥ ( त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चंद्रमंडले ॥ त्वमेव च जग
न्माता मामुद्धर वरानने ॥ २ ॥ सौभाग्यं कुलवृद्धिं च देहि त्वं मम सुव्रते ॥ यन्मया दुष्कृतं सर्वं
कृतं जन्मशतैरपि ॥ भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ॥ ३ ॥ ( अथ ब्रह्मसत्यवतोः प्रार्थना )
अवियोगो यथा देव सावित्र्या सहितस्य । अवियोगस्तथास्माकं भूयाज्जन्मनिजन्मनि ॥ १ ॥

( यमप्रार्थना ) कर्मसाक्षिञ्जगत्पूज्य सर्ववंद्य प्रसीद मे । संवत्सरं व्रतं सर्वं परिपूर्णं तदस्तु मे ॥ १ ॥ ( सावित्रीप्रार्थना ) सावित्री त्वं यथा देवि चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु ॥ १ ॥ सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिये । पूजितासि द्विजैः सर्वैः स्त्रीभिर्मुनिगणै स्तथा ॥ २ त्रिसंध्यं देवि भूतानां वंदनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोस्तु ते ॥ ३ ततः सुवासिनीः संपूज्य वायनानि दत्त्वा कथाश्रवणादिना रात्रिं निनयेत् । ततः प्रात रग्निं प्रतिष्ठाप्य आज्यभागांते गायत्रीमंत्रेण पायसघृततिलव्रीहिदूर्वाभिः प्रत्येकमष्टोत्तरशतं हुत्वा तिलव्रीहियवाज्यैः प्रत्येकमष्टोत्तरशतं व्याहृतिहोमं कुर्यात् । तद्यथा । ॐ भूः स्वाहा इदमग्नये १०८ ॐ भुवः स्वाहा इदं वायवे १०८ ॐ स्वः स्वाहा इदं सूर्याय १०८ इति व्याहृतिमंत्राः । ततो ब्रह्मा दिदेवताभ्यश्चैकैकयाऽऽज्याहुत्या हुत्वा होमशेषं समाप्य चतुर्विंशतिं द्वादशाष्टौ चत्वारि वा मिथु नानि वस्त्रादिना संपूज्य वायनानि दद्यात् । ( वायनम् ) पूरिकामोदकमंडकादिकूष्मांडनारिकेल मातुलुंगदाडिमबीजपूरादिफलहारिद्राकुंकुमकेशरविचूर्णिकाकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुक्यादर्श पात्रादिदक्षिणातांबूलादियुतशूर्पविहितं वायनं दद्यात् । तत्र मंत्रः । सोपस्करं द्विजश्रेष्ठ

व्रतसंपूर्तिकारकम् । वायनं ते प्रयच्छामि सावित्री प्रीयतामिति ॥ १ ॥ ततः आचार्यं सपत्नीकं वस्त्रालंकारवेष्टनैः संपूज्य सोपस्करं प्रतिमायुतं पीठं सोपस्करां शय्यां सवत्सां धेनुं च दद्यात् । ततः अन्येभ्यो ब्राह्मणेभ्यो दक्षिणां दत्त्वा रात्रौ अरुंधत्यै प्रणम्य अर्घ्यं दद्यात् । तत्र मंत्रः । अरुंधति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे । सर्वदेवनमस्कार्ये पतिव्रते नमोस्तु ते ॥ १ ॥ अर्घ्यमेतन्मया दत्तं फलपुष्पसमन्वितम् । पुत्रान्देहि सुखं देहि गृहाणार्घ्यं नमोस्तु ते ॥ २ ॥ ततो यथाशक्ति ब्राह्मणान् संभोज्य तेभ्यो दक्षिणां दत्त्वा आशिषो गृहीत्वा इष्टजनैः सह भुंजीत । एवं या कुरुते नारी व्रतमेतदनुत्तमम् । भ्रातरः पितरौ पुत्राः श्वशुरः स्वजनास्तथा ॥ १ ॥ चिरायुषस्तथाऽरोगा भवंति च न संशयः । भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते ॥ २ ॥ इति स्कंदपुराणोक्तं वटसावित्रीव्रतोद्यापनं समाप्तम् ॥ ॥ अथ सोमवत्यमावास्याव्रतोद्यापनं लिख्यते ॥ ( अमावास्या तु सोमेन सप्तमी भानुना सह । चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥ १ ॥ चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाः । स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत ॥ २ ॥ ) सोमवत्यमावास्यायां प्रातर्नद्यादौ स्नात्वा नित्यक्रियां कृत्वा अश्वत्थमुदक

सेचनपूर्वकं सूत्रेण वेष्टयित्वा तन्मूले लक्ष्मीसहितविष्णुं पुरुषसूक्तेन स्त्री चेन्नाममंत्रेण षोडशोपचारैः संपूज्य । अमायै नमः १ सोमायै नमः २ इति अमासोमयोः पूजां कुर्यात् । ततोऽश्वत्थं गंधादिना संपूज्य । अश्वत्थ हुतभुग्वासा गोविंदस्य सदा प्रिय । अशेषं हर मे पापं वृक्षराज नमोस्तु ते ॥ १ ॥ यन्मया मनसा वाचा नियमात्पूजनं कृतम् । सर्वं संपूर्णतां यातु तद्विष्णोश्च प्रसादतः ॥ २ ॥ इति प्रार्थयेत् । ततो वायनं दत्त्वा । नमो भगवते वासुदेवाय १ इति मंत्रेण प्रतिप्रदक्षिणमेकैकफलार्पणपूर्वकमष्टोत्तरशतं प्रदक्षिणाः कार्याः । इति प्रातःकृत्यम् ॥ ततो देशकालौ संकीर्त्य मम सकलपापक्षयपूर्वकमवैधव्यपुत्रपौत्रातुलसौभाग्यप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरितसोमवत्यमावास्याव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि रौप्यमयं पीठं संस्थाप्य तदुपरि सुवर्णरचितमश्वत्थं च स्थापयित्वा तदधः हैमं लक्ष्मीनारायणं प्रतिष्ठापयेत् । तत्र मंत्रः । ॐ इदंविणुर्विचक्रमेत्रेधानिदधे पदम् । समूढमस्यपाᳫंसुरे ॥ ततः पुरुषसूक्तेन नाममंत्रेण वा षोडशोपचारैः संपूज्य कथाश्रवणादिना रात्रिं निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ॥ ॐ इदंविष्णुर्वि

चक्रमे० १ इति मंत्रेण अश्वत्थसमित्पायसतिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया हुत्वा सर्व तोभद्रदेवताभ्यश्चैकैकयाज्याहुत्या होमं कुर्यात् । ततो होमशेषं समाप्य आचार्यं वस्त्रादिना संपूज्य सोपस्करं पीठं व्रतपूर्त्तये गां च दद्यात् । ततो द्वादश ब्राह्मणान् घृतान्वितपायसादिनान्नेन तर्पयित्वा आशिषो गृहीत्वा स्वयं भुंजीत । इति भविष्योत्तरपुराणोक्तं सोमवत्यमावास्याव्रतोद्यापनं समाप्तम् ॥ ॥ अथ गौरीतपोव्रतं तदुद्यापनं च ॥ तद्व्रतं मार्गशीर्षाऽमावास्यायां कार्यम् । इदं व्रतं षोडशवर्षात्मकम् । अशक्तौ षोडशमासात्मकम् । तत्र प्रथमेऽब्दे चतुर्दश्यां नक्तममावास्यायामुपोषणं पूजनं च । प्रतिपदि पारणम् । ततो द्वितीये वर्षे अमावास्यायां नक्तं प्रतिपदि उपोषणं द्वितीयायां पारणम् एवं प्रतिवर्षं तिथिवृद्धिः । पूर्वां त्यक्त्वा द्वितीयामाचरेत् । एवं षोडशवर्षं कृत्वा अंते उद्यापनं कार्यम् ॥ अथोद्यापनप्रयोगः । मार्गशीर्षपूर्णिमायां प्रातः स्नात्वा नित्यकर्म कृत्वा शिवालये स्वगृहे वा सर्वतोभद्रं विरच्य तत्पश्चिमतः प्राङ्मुख उपविश्य देशकालौ संकीर्त्य मम पतिपुत्रादिसुखप्राप्तिपूर्वकातुलसौभाग्यधनसमृद्धिद्वारा श्रीगौरीप्रीत्यर्थं षोडशवर्षाचरितगौरीतपोव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः

व्र० ॥११७॥

संपूज्य तन्मध्यस्थे ताम्रकलशे सुवर्णमयीं गौरीप्रतिमामीश्वरप्रतिमां च । ॐ गौरीर्मिमाय० १ त्र्यंब
कंयजामहे० २ इति मंत्राभ्यां प्रतिष्ठापयेत् । ततः पुरुषसूक्तेन नाममंत्रेण वा षोडशोपचारैः संपूज
येत् । तत्र पुष्पपूजांते अंगपूजा कार्या । तद्यथा । पार्वत्यै नमः पादौ पूजयामि १ हैमवत्यै०
जानुनी पू० २ अंबिकायै० जंघे० ३ गिरीशवल्लभायै० गुह्यं० ४ गंभीरनाभ्यै० नाभिं० ५ अप
र्णायै० उदरं पू० ६ महादेव्यै हृदयं० ७ श्रीकंठकामिन्यै० कंठं ८ षण्मुखमात्रे० मुखं० ९
लोकमोहिन्यै० ललाटं पू० १० मेनकाकुक्षिरत्नायै० शिरः पूजयामि ११ ( दक्षिणे ) सवाहनं
श्रीगणेशं पूजयामि १२ ( वामे ) सवाहनं स्कंदं पूजयामि १३ ततः सफलमर्घ्यं दत्त्वा ताम्र
पात्रे फलपूरिकातिलतंडुलसौभाग्याष्टकयुते घृतदीपमष्टतंतुमयीवर्तियुतं प्रज्वाल्य सूर्योदयपर्यंतं
संरक्ष्य कथाश्रवणादिना रात्रिं निनयेत् । ततः प्रातः पुनः संपूज्य । अग्निं प्रतिष्ठाप्य आज्यभा
गांते घृततिलद्रव्येण गौर्यै ईश्वराय च प्रत्येकं नाममंत्रेणाष्टोत्तरशतं हुत्वा ब्रह्मादिदेवताभ्यश्चैकैका
ज्याहुतिं हुत्वा होमांते षोडश दंपतीन् वस्त्रादिना संपूज्य । शर्करापूपमोदकपूरितान्धातुमयान्
मृन्मयान्वा करकान् सदक्षिणांस्तेभ्यो दद्यात् । तत्र मंत्रः । मोदकाद्यैश्च संपूर्णं व्रतसंपूर्त्ति

कारकम् । करकं ते प्रयच्छामि गौरी मे प्रीयतामिति ॥ १ ॥ ततः आचार्यं संपूज्य सोपस्करं प्रतिमाद्वयं व्रतपूर्त्तये सवत्सां गां च दद्यात् । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा तैराशिषो गृहीत्वा बंधुभिः सह भुञ्जीत । इति कालिकापुराणोक्तं गौरीतपोव्रतोद्यापनं समाप्तम् ॥ ॥ अथ पौषमाघामावास्यायामर्धोदयव्रतम् । ( उक्तं च स्कांदे महाभारते च ) अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्धोदयः । स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ दिवैव योगः शस्तोयं न तु रात्रौ कदाचन इति ॥ तत्र प्रयोगः । पूर्वाह्णे संगमे तीर्थादौ स्नात्वा संध्यातर्पणादिनित्यकर्म समाप्य शुचिर्भूत्वा सर्वपापविशुद्ध्यर्थं नियमस्थो भवेत् । देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा ब्रह्मविष्णुशिवप्रीत्यर्थमर्धोदय व्रतं करिष्ये । इति संकल्प्य । सामान्यतो गणपतिपूजनं कुर्यात् । ततः त्रिदैवत्यं व्रतं देवाः करिष्ये मुक्तिदं परम् । भवंतु सन्निधौ मेऽद्य त्रयो देवास्त्रयोऽग्नयः ॥ १ ॥ इति नियमं श्रावयेत् ॥ ततो गोमयोपलिप्ते शुद्धभूमौ आस्तृतकुशोपरि सार्द्धशतत्रयद्रोणपरिमिततिलानां पर्वतत्रयं कृत्वा ( अथवा यथाशक्ति तिलपर्वतं कृत्वा ) तत्र क्रमेण पलाधिकसुवर्णरचितं

ब्रह्मविष्णुशिवानां प्रतिमात्रयं संस्थाप्य । ॐ ब्रह्मजज्ञानम्प्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ १ ॥ ॐ भूर्भुवःस्वः ब्रह्मन्निहागच्छ इह तिष्ठ । ॐ ब्रह्मणे नमः ॥ १ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाꣳसुरेस्वाहा।ॐ भू० विष्णो इहा० ॐ विष्णवेनमः ॥ २ ॥ ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् । ऊर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॐ भू० शिव इहा० ॐ शिवाय नमः ॥ ३ ॥ एतैर्मंत्रैरावाह्य प्रत्येकं पुरुषसूक्तेन षोडशोपचारैः संपूज्य परितः इंद्रादिलोकपालांश्च तत्तन्मंत्रैरावाह्य पूजयेत् । अथाङ्गपूजा । तत्रादौ ब्रह्मणः । नमो विश्वसृजे तुभ्यं सत्याय परमेष्ठिने । देवाय देवपतये यज्ञानां पतये नमः ॥ १ ॥ ॐ ब्रह्मणे नमः पादौ पूजयामि १ हिरण्यगर्भाय० ऊरू पू० २ धात्रे० जानुनी० ३ परमेष्ठिने० जंघे पू० ४ वेधसे गुह्यं पू० ५ पद्मोद्भवाय० नाभिं पू० ६ हंसवाहनाय० कटी पू० ७ शतानंदाय० वक्षःस्थलं पू० ८ सावित्रीपतये० बाहू पू० ९ ऋग्वेदाय० पूर्ववक्त्रं पू० १० यजुर्वेदाय० दक्षिणवक्त्रं पू० ११ सामवेदाय० पश्चिमवक्त्रं पू० १२ अथर्ववेदाय० उत्तर वक्त्रं पू० १३ कपिलाय० कपोलौ पू० १४ चतुर्वक्त्राय० शिरः पूजयामि १५ एवं संपज्य ।

हिरण्यगर्भपुरुष प्रधानव्यक्तरूपक । प्रसीद सुमुखो भूत्वा पूजां गृह्ण नमोस्तु ते ॥ १ ॥ इति प्रार्थयेत् ॥ ( विष्णुपूजां ) नारायण जगन्नाथ नमस्ते गरुडध्वज । पीतांबर नमस्तुभ्यं जनार्दन नमोस्तु ते ॥ १ ॥ ॐ अनंताय० पादौ पूजयामि १ विश्वरूपाय० ऊरू पू० २ मुकुंदाय० जानुनी पू० ३ गोविन्दाय जंघे पू० ४ प्रद्युम्नाय० गुह्यं पू० ५ पद्मनाभाय० नाभिं पू० ६ भुवनोदराय० उदरं पू० ७ कौस्तुभवक्षसे० वक्षः पू० ८ चतुर्भुजाय० बाहू पू० ९ विश्वतोमुखाय० मुखं पू० १० सहस्रशिरसे देवायानंताय नमः शिरः पूजयामि ११ इति संपूज्य । आदित्यचंद्रनयन दिग्बाहो दैत्यसूदन । पूजां दत्तां मया भक्त्या गृहाण करुणाकर ॥ १ ॥ इति प्रार्थयेत् ॥ ( शिवपूजा ) महेश्वर महेशान नमस्ते त्रिपुरांतक । जीमूतकेशाय नमो नमस्ते वृषभध्वज ॥ १ ॥ ॐ ईशानाय० पादौ पू० १ चंद्रशेखराय० जंघे पू० २ पशुपतये० जानुनी पू० ३ शंकराय० ऊरू पू० ४ उमाकांताय० गुह्यं पू० ५ नीललोहिताय० नाभिं पू० ६ कृत्तिवाससे उदरं पू० ७ नागयज्ञोपवीतिने० हृदयं पू० ८ भुजंगभूषणाय० बाहू पू० ९ नीलकंठाय० कंठं पू० १० पंचवक्त्राय० मुखं पू० ११ कपर्दिने० शिरः पू० १२ इति संपूज्य । अंधकारेऽप्रमेयात्मन्नमो लोकांतकाय च । पूजां मया कृतां

भक्त्या गृहाण वृषभध्वज ॥ १ ॥ इति प्रार्थयेत् । ततः सपत्नीकं वेदशास्त्रविदं ब्राह्मणमाचार्य त्वेन वृत्वा वस्त्रालंकारभूषणैः संपूज्य पुनर्ब्रह्मविष्णुमहेशानां पंचामृतपुरःसरं पूजनं कार्यम् । तत्र ब्रह्मणे पीठं छत्रं कमंडलुं श्वेतवस्त्रयुगं कमलपुष्पाणि चार्पयेत् १ विष्णवे पीतवस्त्रयुगं तुलसीपत्राणि च २ शिवाय रक्तवस्त्रयुगम् अखंडितबिल्वपत्राणि चार्पयित्वा ३ प्रार्थयेत् । ब्रह्मविष्णुमहेशानाः कर्मणां फलहेतव । भक्त्या मया कृतां पूजां गृह्णीध्वं जगदीश्वराः ॥ १ ॥ ततः आचार्यः अग्निं प्रतिष्ठाप्य आज्यभागांते घृताक्ततिलशर्कराद्रव्यैः प्रति दैवतं सहस्रसंख्यया होमं कुर्यात् । तत्र मंत्राः । ॐ ब्रह्माजज्ञानं० स्वाहा इदं ब्रह्मणे १ ॐ इदंविष्णुर्विचक्रमे० स्वाहा इदं विष्णवे २ ॐ त्र्यंबकं यजामहे० स्वाहा इदं शिवाय ३ ( भविष्ये तु ब्रह्मणे पलाशसमिच्चरुतिलाज्यानि १ विष्णवे अश्वत्थ समित्तिलपयसानि २ शिवाय चर्वाज्यव्रीहयश्च होमद्रव्याण्युक्तानि ३ ) ततः लोकपालेभ्यस्तत्तन्नाममंत्रेण वैदिकेन वा एकैकामाज्याहुतिंहुत्वा होमांते तिलपर्वतं प्रतिमात्रययुतं ब्राह्मणाय दद्यात् । तत्र मंत्रः । तिलपर्वतमध्यस्था ब्रह्मविष्णु महेश्वराः । दहंतु पातकं सर्वं यच्छन्तु मम सद्गतिम् ॥ १ ॥ ततः सांगतासिद्ध्यर्थं रक्तकृष्णश्वेतवर्णं

सुरभित्रयं सोपस्करं शय्यात्रयं च दद्यात् । अभावे सवत्सां सोपस्करामेकां गामाचार्याय दद्यात् । घृतपूरितं वा पायसपूरितं कांस्यपात्रं सदक्षिणं ससुवर्णं च कस्मैचिद्दत्त्वा ब्राह्मणान् पायसान्नेन भोजयित्वा तेभ्यो दक्षिणां च दत्त्वा आशिषो गृहीत्वा स्वयं भुंजीत ॥ इति स्कंदपुराणोक्तमर्धोदयव्रतविधानम् ॥ इति गौडपण्डितश्रीचतुर्थीलालविरचिते व्रतोद्यापनप्रकाशे अमावास्याव्रतोद्यापनानि ॥ अथ मलमासव्रतोद्यापनम् ॥ मलमासस्य कृष्णपक्षे चतुर्दश्यां त्रयोदश्यां नवम्यामष्टम्यां तृतीयायां वाऽन्यतमतिथौ कार्यम् । तत्र प्रयोगः । प्रातर्नद्यादौ स्नात्वा संध्यादिनित्यकर्म कृत्वा वासुदेवं हृदि स्मरन्मध्याह्ने मध्याह्नसंध्यां कुर्यात् । ततः स्वगृहे कदलीस्तंभादिभिः पुष्पमंडपं कृत्वा तन्मध्ये वेदिकायां सर्वतोभद्रं विरच्य । तत्पश्चिमतः प्राङ्मुख उपविश्य देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकं धर्मार्थकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं मासव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तत्र ताम्रकलशोपरि सौवर्णं लक्ष्मीयुतं विष्णुं संस्थाप्य । ॐ इदंविष्णुर्विचक्रमे० इति मंत्रेणावाह्य पुरुषसूक्तेन षोडशोपचारैः संपूजयेत् । तत्र पंचामृतं

गंधतोयं पीतवस्त्रद्वयं यज्ञोपवीते केशरं नानाविधपीतपुष्पाणि कोमलानि तुलसीदलानि भक्ष्य भोज्यादिनानाविधं नैवेद्यं तांबूलं नानर्तुकालदेशोद्भवफलानि च निवेद्य कर्पूरगर्भितबहुघृतवर्तिभि र्नीराजनं कृत्वा प्रदक्षिणाचतुष्टयं विधाय साष्टांगं प्रणम्य त्रयस्त्रिंशन्नामभिः प्रार्थयेत् । तद्यथा । ॐ जिष्णवे नमः १ विष्णवे नमः २ महाविष्णवे० ३ हरये० ४ कृष्णाय० ५ अधोक्षजाय० ६ केशवाय० ७ माधवाय० ८ रामाय० ९ अच्युताय० १० पुरुषोत्तमाय० ११ गोविंदाय० १२ वामनाय० १३ श्रीशाय० १४ श्रीकंठाय० १५ विश्वसाक्षिणे० १६ नारायणाय० १७ मधुरिपवे० १८ अनिरुद्धाय० १९ त्रिविक्रमाय० २० वासुदेवाय० २१ जगद्योनये० २२ शेषतल्पगताय० २३ संकर्षणाय० २४ प्रद्युम्नाय० २५ दैत्यारये० २६ विश्वतोमुखाय० २७ जनार्दनाय० २८ धराधराय० २९ श्रीधराय० ३० गरुडध्वजाय० ३१ हृषीकेशाय० ३२ पद्मनाभाय० ३३ । ततस्ताम्रपात्रे जलचंदनाक्षतपुष्पदूर्वांकुरपंचरत्ननानाफलानि गृहीत्वा जानुभ्यामवनिं गत्वा हस्तौ भाल आरोप्य श्रद्धयाऽर्घ्यं दद्यात् । तत्र मंत्रः देवदेव जगन्नाथ प्रलयोत्पत्तिकारक । गृहाणार्घ्यं मया दत्तं कृपां कृत्वा ममोपरि ॥ १ ॥ स्वयंभुवे नमस्तुभ्यं ब्रह्मणेऽमिततेजसे नमोस्तु ते

प्रियानंत ब्राह्मणानां दयां कुरु ॥ २ ॥ ततो रात्रौ कीर्तनश्रवणादिना जागरणं कृत्वा आमावास्यायां प्रातर्विष्णुं पूर्ववत्संपूज्य अग्निं प्रतिष्ठाप्य आज्यभागांते समित्तिलाज्यचरुद्रव्यैः । ॐ अतोदेवा० इति षण्मंत्रैरयुतम् अथवा इदंविष्णुरिति मंत्रेण सहस्रं वाष्टोत्तरशतं होमं कृत्वा पूर्वोक्तैस्त्रयस्त्रिंशन्नामभिः सर्वतोभद्रदेवतानामभिश्चैकैकाज्याहुतिं जुहुयात् । ततो होमशेषं समाप्य सपत्नीकमाचार्यं वस्त्रादिभिः संपूज्य त्रयस्त्रिंशदपूपान् कांस्यपात्रे निधायस घृतं सहिरण्यं दद्यात् । तत्र मंत्रः । दाता दिवाकरो देवो ग्रहीता च दिवाकरः । दानेनानेन विप्रेंद्र सूर्यो मे प्रीयतामिति ॥ १ ॥ प्रीयंतां देवदेवेशाः ब्रह्मशंभुजनार्दनाः । तेषां प्रसादात्सकला मम संतु मनोरथाः ॥ २ ॥ ततो व्रतपूर्त्तये सवत्सां गां सोपस्करां शय्यां प्रतिमायुतं पीठं च आचार्याय दत्त्वा ऋत्विग्भ्यो वासांसि दद्यात् । ततस्त्रयस्त्रिंशत्कुंभान् कांस्यपात्रसमायुक्तान् घृतापूपान् वटकैः सहितान् यथाशक्ति दक्षिणासहितांश्च दत्त्वा शर्कराघृतपायसैर्ब्राह्मणान् भोजयित्वा दक्षिणां दत्त्वा आशिषो गृहीत्वा बंधुभिः सह भुंजीत ॥ इति भविष्योक्तं मलमासव्रतोद्यापनम् ॥ अथ कार्तिकमासोद्यापनम् ॥ कार्तिकशुक्लचतुर्दश्यां प्रातर्नद्यादौ स्नात्वा नित्यकर्म समाप्य तुलसीसमीपे चतुर्द्वारं मंडपं कृत्वा द्वारेषु पूर्वादिक्रमेण मृन्मयान् पुण्य

शीलं १ सुशीलं २ जयं ३ विजयं ४ च एतान् द्वारपालान्स्थापयेत् । ततस्तुलसीमूलदेशे वेद्यां सर्वतोभद्रं विलिख्य तत्पश्चिमतः प्राङ्मुख उपविश्य । देशकालौ स्मृत्वा । मम समस्तपापक्षयपूर्वकं धर्मार्थकाममोक्षसिद्धिद्वारा श्रीदामोदरप्रीतये कार्तिकोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तत्र ताम्रकलशोपरि सौवर्णीं लक्ष्मीसहितां दामोदरप्रतिमां प्रतिष्ठाप्य । ॐ इदंविष्णुरितिः मंत्रेणावाह्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य परितो लोकपालांश्चावाह्य पूजयेत् । ततो गीतवाद्यादिमंगले रात्रौ जागरणं कृत्वा पौर्णमास्यां प्रातरग्निं प्रतिष्ठाप्य । आज्यभागांते । अतो देवाऽअवन्तुनोयतोविष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिःस्वाहा १ इदं विष्णवे० । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपा७ंसुरेस्वाहा २ इदं विष्णवे । इति द्वाभ्यां मंत्राभ्यां तिलाज्यपायसैरष्टोत्तरशतं हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समापयेत् । ततः सपत्नीकान् एकत्रिंशद्ब्राह्मणान्निमंत्र्य आचार्यं वस्त्रालंकारैः संपूज्य तांश्च संपूज्य प्रार्थयेत् । युष्मत्प्रसादाद्देवेशः प्रसन्नो मम सर्वदा । व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ॥ १ ॥ तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः । मनोरथाश्च सफलाः

संतु नित्यं तवार्चनात् ॥ देहांते वैष्णवं स्थानं प्राप्नुयाममतिदुर्लभम् ॥ २ ॥ इति क्षमाप्य देवं विसृज्य सोपस्करां प्रतिमां व्रतपूर्त्तये कपिलां गां सोपस्करां शय्यां च आचार्याय दद्यात् । ततो ब्राह्मणान् भोजयित्वा तैराशिषो गृहीत्वा बंधुभिः सह भुंजीत ॥ एवमेव माघवैशाखोद्यापनं च कार्यम् । इति स्कांदोक्तं कार्तिकमाघोद्यापनम् ॥ अथ स्वस्तिकव्रतोद्यापनम् ॥ एतद्व्रतं तु आषाढादि आश्विनांतं कार्यम् । देवालये गोष्ठे तुलस्यालये गृहे वा गोमयोपलिप्तशुद्धभूमौ पंचरंगैर्वर्णैः प्रत्यहं सहस्राणि स्वस्तिकानि लिखित्वा तत्र गोपालं संपूजयेत् । एवं चरित्वा अंते उद्यापनं कुर्यात् । ( तस्य प्रयोगः ) देशकालौ संकीर्त्य मम शत्रुपराजयपापक्षयवैधव्यादिदुःखनिरसनपूर्वकं पुत्रपौत्रसौभाग्यायुरारोग्यैश्वर्यादिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरितस्वस्तिकव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य । तत्र मध्यस्थे ताम्रकलशे सौवर्णं गोपालरूपिणं विष्णुम् । इदं विष्णुर्विचक्रमे० १ इति मंत्रेण प्रतिष्ठाप्य नाममंत्रेण पुरुषसूक्तेन च पूजयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते स्वस्तिकदशांशेन शतांशेन वा । ॐ स्वस्त्ययनंतार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानामसुरघ्नमिन्द्रसखंसमत्सुबृहद्यशोनावमि

व्र० ॥१२२॥

वारुहेम १ इति मंत्रेण । अथवा ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः० १ इत्यनेन पौराणिकमंत्रेण वाघृताक्तपायसहोमं कुर्यात् । ( पौराणिकमंत्रः ) स्वस्तिना परमं देवं स्वस्तिकगणकारणात् । स्वस्तये पायसं यच्छ संयुक्तं ममाग्नये स्वाहा ॥ १ ॥ ततो ब्रह्मादिदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समाप्य होमदशांशेन होम मंत्रेण तर्पणम् । तद्दशांशेन मार्जनं तद्दशांशेन ब्राह्मणभोजनम् । ततो विशिष्टान् दश ब्राह्मणान् वस्त्रादिना संपूज्य तेभ्यः पंचरंगयुतान्योर्णानि तदभावे दर्भजान्यासनानि दक्षिणासहितानि दत्त्वा आचार्याय सोपस्करां प्रतिमां व्रतपूर्तये गोमिथुनं च दद्यात् । तदभावे यवानां द्रोणं दत्त्वा पूरिकामोदकादिभिर्ब्राह्मणान् भोजयित्वा आशिषो गृहीत्वा स्वयं भुंजीत ॥ इति भविष्योक्तं स्वस्तिकव्रतोद्यापनम् ॥ अथ वारव्रतोद्यापनानि ॥ तावत् रविवारे सूर्यव्रतं तदुद्यापनं च लिख्यते । एतद्व्रतं मार्गशीर्षाद्यरविवारे प्रगृह्य वर्षपर्यंतं कार्यम् । तद्यथा । प्रातर्नद्यादौ स्नात्वा संध्यातर्पणादिनित्यकर्म विधाय देशकालौ स्मृत्वा मम समस्तरोगनिरासार्थमायुरारोग्यपुत्रपौत्रसौभाग्यादिप्राप्तिद्वारा श्रीसूर्यनारायणप्रीतये आदित्यव्रतं करिष्ये इति संकल्प्य । गोमयोपलिप्ते शुचौ देशे पंचरंगैर्द्वादशारं पद्मं विलिख्य तत्र ताम्रपात्रं निधाय तन्मध्ये

रक्तचंदनादिना अष्टदलं पद्मं कृत्वा तत्र सुवर्णमयीं सूर्यप्रतिमां संस्थाप्य वक्ष्यमाणरीत्या प्रतिमासं रविवारे पुरुषसूक्तेन स्त्री चेन्नाम मंत्रेण षोडशोपचारैः पूजयेत् । मार्गशीर्षादिप्रत्यर्कवारे अर्घ्यनैवेद्यस्वभक्ष्यादिषु विशेषः । तद्यथा । मार्गशीर्षे मित्रो नाम सूर्यदेवता । नालिकेरेणार्घ्यदानम् । नैवेद्ये गुडौदनम् । स्वयं तुलसीपत्रत्रयभक्षणम् । साज्यगुडौदनेन सदक्षिणं ब्राह्मणमेकं भोजयेत् ॥ १ ॥ पौषे विष्णुर्नाम देवता । बीजपूरेणार्घ्यम् । नैवेद्ये कृसरम् । पलत्रयघृतप्राशनम् । विप्राय घृतकृसरभोजनम् ॥ २ ॥ माघे वरुणदेवता । पूगीफलेनार्घ्यम् । सतिलगुडं नैवेद्यम् । मुष्टित्रयं तिलाः प्राश्याः । विप्राय गुडतिलदानम् ॥ ३ ॥ फाल्गुनेसूर्यदेवता । जंबीरेणार्घ्यम् । सघृतं दधि नैवेद्यम् पलत्रयदधिप्राशनम् । दधितंडुलान्नेन विप्रभोजनम् ॥ ४ ॥ चैत्रे भानुर्नाम देवता । दाडिमीफलसहितमर्घ्यम् । घृतपूरिका नैवेद्यम् । पलत्रयदुग्धप्राशनम् । विप्राय मिष्टान्नं सदक्षिणम् ॥ ५ ॥ वैशाखे तपनः सूर्यः । द्राक्षासहितमर्घ्यम् । सघृतमाषान्नं नैवेद्यम् । गोमयप्राशनम् । सघृतसदक्षिणं माषान्नं विप्राय दानम् ॥ ६ ॥ ज्येष्ठे इंद्रनामा सूर्यः । सहकारेणार्घ्यम् । दधिसक्तवो नैवेद्यम् । अंजलित्रयजलप्राशनम् । दध्योदनेन विप्रभोजनम् ॥ ७ ॥ आषाढे रविर्नाम देवता । जातीफलेनार्घ्यम् । पृथुका नैवेद्यम् ।

मरिचत्रयभक्षणम् । चिपिटकान्नेन विप्रभोजनम् ॥ ८ ॥ श्रावणे गभस्तिनामा सूर्यः । त्रपुषी ( ककडी ) फलेनार्घ्यम् । यवसक्तु पूरिका नैवेद्यम् । मुष्टित्रयसक्तुप्राशनम् । यथेष्टं विप्राय भोजनम् ॥ ९ ॥ भाद्रपदे यमो नाम देवता । कूष्मांडेनार्घ्यम् । साज्यौदनं नैवेद्यम् । गोमूत्रप्राशनम् । यथेष्टं विप्रभोजनम् ॥ १० ॥ आश्विने हिरण्यरेता नाम देवता । दाडिमेनार्घ्यम् । नैवेद्ये शुद्धशर्करा । पलत्रयशुद्ध शर्कराप्राशनम् । शालिशर्करया विप्रभोजनम् ॥ ११ ॥ कार्त्तिके दिवाकरनामा सूर्यः । रंभाफलेनार्घ्यम् । पायसनैवेद्यम् । पायसप्राशनम् । पायसेन विप्रभोजनम् ॥ १२ ॥ एवं वर्षपर्यंतं कुर्यात् । कुष्ठादिमहारोगशांतिकामस्तु द्वादशवर्षपर्यंतं कृत्वा अंते मार्गशीर्षादि विवासरे उद्यापनं कुर्यात् । अथोद्यापनप्रयोगः । प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा । देशकालौ संकीर्त्य । मम समस्तपापक्षयपूर्वकं शरीरायुरारोग्यैश्वर्यपुत्रपौत्रसौभाग्यादिप्राप्तिद्वारा श्रीसूर्यनारायणप्रीतये आचरितसूर्यव्रतोद्यापनं करिष्ये इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततो मध्याह्ने सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तत्र ताम्रकलशं प्रतिष्ठाप्य तदुपरि रक्ताक्षतपूर्णं ताम्रपात्रं निधाय रक्तपट्टवस्त्रं प्रसार्य्य मत्र कुंकुमादिना द्वादशारं कमलं विलिख्य तन्मध्ये रौप्यमयं रथं प्रतिष्ठाप्य तदु

पारि सौवर्णं सहस्रकिरणं संज्ञया सहितं सूर्यं स्थापयेत् । तत्र मंत्रः । ॐ आकृष्णेनरजसावर्त्तमानो निवेशयन्नमृतंमर्त्यंच । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ ॐ भूर्भुवःस्व भगवन् सूर्य इहागच्छ इह तिष्ठ इत्यावाह्य परितो द्वादशदलेषु द्वादशमासाधिपान् क्रमेण स्थापयेत् । तद्यथा । ॐ मित्राय नमः मित्रमावाहयामि १ विष्णवे नमः विष्णु० २ वरुणाय० वरुण० ३ सूर्याय० सूर्यं० ४ भानवे० भानु० ५ तपनाय० तपन० ६ इंद्राय० ७ रवये० ८ गभस्तये० ९ यमाय० हिरण्यरेतसे० ११ दिवाकराय नमः दिवाकरमावाहयामि १२ इत्यावाह्य । संज्ञया भार्यया सहिताय सूर्याय नमः इति नाममंत्रेण पुरुषसूक्तेन च षोडशोपचारैः पूजयेत् । पूजने रक्ताक्षतरक्तचंदनरक्तपुष्प कौसुंभवस्त्रयुग्मं पायसनैवेद्यादिकं दद्यात् । पुष्पपूजांते अंगपूजा कार्या । तद्यथा । मित्राय नमः पादौ पूजयामि १ रवये० जंघे पू० २ सूर्याय० जानुनी पू० ३ खगाय० ऊरू पू ४ पूष्णे० गुह्यं पू० ५ हिरण्यगर्भाय० कटी पू० ६ मरीचये० नाभिं पू० ७ आदित्याय० जठरं पू० ८ सवित्रे० हृदयं पू० ९ अर्काय० स्तनौ पू० १० भास्कराय कंठं पू० ११ अर्यम्णे० स्कंधौ पू० १२ प्रभाकराय० हस्तौ पू० १३ अहस्कराय० मुखं पू० १४ ब्रध्नाय० नासिकां पू० १५ जगदेकचक्षुषे नेत्रे पू० १६ सवित्रे०

प्र०
॥१२४॥

कर्णौ पू० १७ त्रिगुणात्मधारिणे० ललाटं पू० १८ विरंचिनारायणशंकरात्मने नमः शिरः पूजयामि १९ तिमिरनाशिने नमः सर्वांगं पूजयामि २० । इति संपूज्य विशेषार्घ्यं नारिकेलयुतं दद्यात् । तत्र मंत्रः । नमः सहस्रकिरण सर्वव्याधिविनाशन । गृहाणार्घ्यं मया दत्तं संज्ञया सहितो रवे ॥ १ ॥ इत्यर्घ्यं दत्त्वा आरार्तिकं कृत्वा सप्त प्रदक्षिणा विधाय सूर्यदैवतं श्राद्धं कुर्यात् । ततः अग्निं प्रतिष्ठाप्य आज्यभागांते संज्ञया सहिताय सूर्याय ॐ आकृष्णेन० इति वैदिकमंत्रेण नाममंत्रेण वा पायसद्रव्येणाष्टोत्तरशतं हुत्वा द्वादशदेवताभ्यो ब्रह्मादिदेवताभ्यश्चैकैकाज्याहुतिं जुहुयात् । ततो होमशेषं समाप्य वस्त्रादिभिराचार्यं संपूज्य सोपस्करां प्रतिमां व्रतपूर्त्यै सवत्सां गां च दत्त्वा द्वादश ब्राह्मणान् पायसेन भोजयित्वा दक्षिणां दत्त्वा बंधुभिः सह भुंजीत । एवमेव आश्विनापररविवारमारभ्य प्रतिरविवारं नक्तव्रतं वर्षपर्यंतम् आशादित्यव्रतं कृत्वा अंत्ये उद्यापनं कुर्यात् । इति भविष्यपुराणोक्तं रविवारव्रतोद्यापनं समाप्तम् ॥ अथ सोमवारव्रतोद्यापनम् ॥ श्रावणे चैत्रवैशाखे ऊर्जे च मार्गशीर्षके । प्रथमे सोमवारे तद्गृह्णीयाद्व्रतमुत्तमम् ॥ १ ॥ एतद्व्रतं यावज्जीवं चतुर्दशाब्दमथवा अष्टवर्षपर्यंतं कर्तव्यम् । अंत्ये पूर्वोक्तश्रावणादिमासे शुक्लपक्षे सोमदिने उद्यापनं कुर्यात् । तत्र

प्रयोगः प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा । देशकालौ संकीर्त्य ममात्मनः समस्तपापक्षयपूर्वक पुत्रपौत्रधनधान्यैश्वर्यादिप्राप्तिद्वारा श्रीमदुमामहेश्वरप्रीतये आचरितसोमवारव्रतोद्यापनं करिष्ये । इति संकल्प्य । आचार्यवरणांतं पूर्ववत् कुर्यात् । ततः आचार्यो मंडपं कृत्वा तत्र अष्टादशांगुलो त्सेधां वितस्तिद्वयविस्तृतां समचतुरस्रां वेदिं विधाय तत्र लिंगतोभद्रम् अथवा सर्वतोभद्रं वा शुक्लतंडुलैः षोडशारं कमलं विरच्य तत्र ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि सौवर्णं शिवं तद्वामे सौवर्णीं गौरीं च पुरतो राजतं वृषभं प्रतिष्ठापयेत् । तत्र मंत्राः । ॐ त्र्यंबकं यजामहे० ॐ भू० शिव इहागच्छ० १ ॐ गौरीर्मिमाय० गौरीहागच्छ० २ ॐ वृषभा० वृषभ इहागच्छ० ३ इत्यावाह्य परितः पूर्वादिक्रमेण । ॐ अनंताय नमः १ सूक्ष्माय० २ शिवाय० ३ उत्तमाय० ४ त्रिमूर्तये० ५ रुद्राय० ६ श्रीकंठाय० ७ शिखंडिने० ८ पुनराग्नेय्यादिविदिक्षु । गणेशाय नमः १ मातृभ्यो० २ दुर्गायै० ३ क्षेत्रपालाय० ४ पुनः पूर्वादिदिक्षु । इंद्राय० १ अग्ने०२ यमाय० ३ निर्ऋतये० ४ वरुणाय० ५ वायवे० ६ कुबेराय० ७ ईशानाय० ८ एवं लोकेशांश्च प्रतिष्ठाप्य । पुरुषसूक्तेन षोडशोपचारैः पंचामृतबिल्वपत्राद्यैश्च संपूज्य पुष्पपूजांते अंगपूजां

व्र०
॥१२५॥

कुर्यात् । तद्यथा । शिवाय नमः पादौ पूजयामि १ शंकराय० गुल्फौ पू० २ भवहारिणे० जानुनी पू० ३ शूलपाणये० कटी० ४ शंभवे० गुह्यं० ५ महादेवाय० नाभिं० ६ विश्वकर्त्रे० उदरं० ७ सर्वतोमुखाय० पार्श्वौ० ८ स्थाणवे० स्तनौ० ९ नीलकंठाय० कंठं० १० देवाय० मुखं० ११ त्रिनेत्राय० नेत्रत्रयं० १२ शर्वाय० ललाटं० १३ शशिभूषणाय० शिरः १४ देवाधिपाय० सर्वांगं पूजयामि १५ एवं संपूज्य कर्पूरेणारार्तिकं कृत्वा प्रदक्षिणात्रयं विधाय साष्टांगं प्रणम्य चंद्रमसे अर्घ्यं दत्त्वा प्रणम्य कथाश्रवणादिना रात्रौ जागरणं कुर्यात् । ततः प्रातः पुनः संपूज्य । स्थंडिले अग्निं प्रतिष्ठाप्य आज्यभागांते । ॐ त्र्यंबकं यजामहे० १ गौरीर्मिमाय० १ इति मंत्रेण यवव्रीहितिलाज्यप लाशसमित्पायसद्रव्यैः प्रत्येकमष्टोत्तरशतद्वयं हुत्वा । ॐ आप्यायस्वेति मंत्रेण पृषदाज्यम् । गौरीर्मिमायेति मंत्रेण त्रिमध्वाक्तदूर्वांकुरैश्चाष्टोत्तरशतं जुहुयात् । ततो ब्रह्मादिदेवताभ्य एकैकाज्याहुतिं हुत्वा होमशेषं समाप्य वस्त्रादिराचार्यं संपूज्य षोडश त्रयोदश वा ब्राह्मणान् वक्ष्यमाणनामभिः तावतः फलपक्वान्नैस्तदभावे तंडुलैर्वा पूरितान् दक्षिणायुतान् घटान् दद्यात् । तत्र षोडश नामानि । सोमेश्वराय नमः १ ईशानाय० २ शंकराय० ३ गिरिजाधवाय० ४ महेशाय० ५ सर्वेशाय० ६भू

स्मरारये० ७ त्रिपुरांतकाय० ८ शिवाय० ९ पशुपतये० १० शंभवे० ११ त्र्यंबकाय० १२ चंद्रशेखराय० १३ गंगाधराय० १४ महादेवाय० १५ वामदेवाय० १६ इति ॥ त्रयोदशपक्षे तु । भवाय० १ शर्वाय० २ रुद्राय० ३ पशुपतये० ४ उग्राय० ५ महते० ६ भीमाय० ७ ईशानाय० ८ सद्योजाताय० ९ वामदेवाय० १० अघोराय० ११ तत्पुरुषाय० १२ ईशानाय नमः ॥ १३ ॥ इति त्रयोदशनामानि । ततः कुंभसहितां प्रतिमामाचार्याय निवेदयेत् । तत्र मंत्रः ॥ शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तव रूपप्रदानेन मम संतु मनोरथाः ॥ १ ॥ यद्भक्त्या देवदेवेश मया व्रतमिदं कृतम् । न्यूनं वाथ क्रियाहीनं परिपूर्णं तदस्तु मे ॥ २ ॥ इति प्रार्थ्य व्रतपूर्त्तये सवत्सां गामाचार्याय दत्त्वा यथाशक्ति ब्राह्मणान् पायसादिना संतर्प्य आशिषो गृहीत्वा बंधुभिः सह भुंजीत । इति स्कांदोक्तं सोमवारव्रतोद्यापनम् ॥ अथ मंगलवारव्रतोद्यापनं लिख्यते । तत्र तावत् मंगलव्रतविधानम् । ( स्कंदपुराणे ) मार्गशीर्षे वैशाखे वा शुक्लपक्षे चंद्रताराबलान्विते भौमवासरे व्रतं प्रगृह्य वक्ष्यमाणविधाना संवत्सरपर्यंतमेकविंशतिवर्षपर्यंतं वा कार्य्यम् । तद्यथा । मंगलवारे अरुणोदयवेलायामुत्थाय शौचविधिं विधाय अपामार्गकाष्ठेन मौनपूर्वकं दंतधावनं कृत्वा नद्यादौ यथाविधि

स्नात्वा संध्यादिनित्यक्रियां समाप्य शिवालये गृहे वा रक्तवाससी परिधाय रक्तगोमयलिप्तमण्डले स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य सपवित्रकरः आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम ऋणाद्यपनुत्तिपूर्वकधनधान्यपुत्रपौत्राद्यभीष्टमनोरथसिद्धिद्वारा श्रीमंगलदेवताप्रीत्यर्थं भौम व्रतं तत्पूजनं च करिष्ये इति संकल्प्य । अथ देवेश ते भक्त्या करिष्ये व्रतमुत्तमम् । ऋणव्याधिविनाशाय धनसंतानहेतवे ॥ १ ॥ इति प्रार्थ्य कर्ता स्वदेहे न्यासं कुर्यात् । तद्यथा । ॐ मंगलाय नमः अंघ्र्योः १ भूमिपुत्राय० जानुनोः २ ऋणहर्त्रे० ऊर्वोः ३ धनप्रदाय० कट्योः ४ स्थिरासनाय० गुह्ये ५ महाकालाय० उरसि ६ सर्वकामावरोधकाय० वामबाहौ ७ लोहिताय० दक्षिण बाहौ ८ लोहिताक्षाय० गले ९ सामगानां कृपाकराय० मुखे १० धरात्मजाय० नासिकायाम् ११ कुजाय० अक्ष्णोः १२ भौमाय० ललाटे १३ भूमिदाय० भ्रुवोर्मध्ये १४ भूमिनंदनाय० शिरसि १५ अंगारकाय० शिखायाम् १६ यमाय० सर्वांगे १७ सर्वरोगापहारकाय० बाहुद्वये १८ दृष्टिकर्त्रे० मूर्द्धादिपादपर्यंतम् १९ दृष्टिहर्त्रे० चरणादिमस्तकांतम् २० सर्वकामफलप्रदाय० दिक्षु २१ आराय० नाभौ १ वक्राय० वक्षसि २ भूमिजाय० मूर्ध्नि ३

एवं न्यासं कृत्वा ध्यायेत् । रक्तमाल्यांबरधरः शक्तिशूलगदाधरः ॥ चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ १ ॥ एवं ध्यात्वा अर्घ्यं संस्थाप्य पूजां कुर्यात् । तद्यथा । त्रिकोणे स्थंडिले यथाविधि ताम्रकलशं संस्थाप्य तत्र एकविंशतिकोष्ठाढ्यं त्रिकोणं ताम्रयंत्रमथवा रक्तचंदननिर्मितां शूलशक्तिधरां मेषारूढां भौमप्रतिमां संस्थाप्य प्राणप्रतिष्ठां कृत्वा आवाहनं कुर्यात् । ॐ एह्येहि भगवन् ब्रह्मन्नंगारक महाप्रभो । त्वयि सर्वं समायातं त्रैलोक्यं सचराचरम् ॥ १ ॥ भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् । रुद्ररूपमनिर्देश्यं वक्रं च रुधिरप्रियम् ॥ २ ॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्याऽअयम् । अपाꣳरेताꣳसिजिन्वति ॥ ॐ अंगारकाय विद्महे शक्तिहस्ताय धीमहि । तन्नो भौमः प्रचोदयात् ॥ इति भौममावाह्य पाद्यादिरक्तपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । मंगलाय नमः पादौ पूजयामि १ भूमिपुत्राय० जानुनी पू० २ ऋणहर्त्रे० ऊरू पू० ३ धनप्रदाय० कटी० ४ स्थिरासनाय० गुह्यं० ५ महाकायाय० उरः पू० ६ सर्वकर्मावरोधकाय० वामबाहुं पू० ७ लोहिताय० दक्षिणबाहुं० ८ ॥ लोहिताक्षाय० कंठं० ९ सामगानां कृपाकराय० मुखं० १० धरात्मजा० नासिकां० ११ कुजाय० नेत्रद्वयं १२ भौमाय० ललाटं० १३ भूमिदाय० भ्रुवोर्मध्यं० १४ भूमि

नंदनाय० मस्तकं० १५ अंगारकाय० शिखां १६ यमाय० सर्वांगं० १७ सर्वरोगापहारकाय० बाहुद्वयं० १८ वृष्टिकर्त्रे० मूर्धादिपादपर्यंतं० १९ वृष्ट्यपहर्त्रे० चरणादिमस्तकांतं० २० सर्वकाम फलप्रदाय० दिशः पूजयामि २१ ततो बाह्यत्रिकोणेषु । वक्राय नमः १ आराय० २ भूमिजाय० ३ तद्बहिरष्टदले पूर्वादिक्रमेण । ॐ ब्राह्मयै नमः १ माहेश्वर्यै नमः २ कौमार्यै० ३ वैष्णव्यै० ४ वाराह्यै० ५ इंद्राण्यै० ६ चामुंडायै० ७ महालक्ष्म्यै० ८ इति मातृकाः पूजयामि । तद्बाह्ये भूपुरे पूर्वादि क्रमेण ॐ इंद्राय नमः १ अग्नये० २ यमाय० ३ निर्ऋतये० ४ वरुणाय ५ वायवे ६ कुबेराय० ७ ईशानाय० ८ ब्रह्मणे० ९ अनंताय० १० इति दशदिक्पालान् पूजयामि । तद्बाह्ये । वज्राय० १ शक्तये० २ दंडाय ३ खड्गाय० ४ पाशाय० ५ अंकुशाय० ६ गदायै० ७ त्रिशूलाय० ८ पद्माय० ९ चक्राय नमः १० इत्यस्त्राणि पूजयामि । एवमावरणपूजां कृत्वा धूपदीपगोधूमान्ननैवेद्यतांबूलदक्षिणानी राजनादिभिः संपूज्य अर्घ्यं दद्यात् । जलपूर्णे ताम्रपात्रे रक्तचंदनरक्ताक्षतपुष्पफलानि निक्षिप्य जानुभ्यामवनीं गत्वा । ॐ भूमिपुत्र महातेजाः स्वेदोद्भव पिनाकिनः । श्रेयोर्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ प्रसीद देवदेवेश विघ्नहारिन्धरात्मज ॥ गृहाणार्घ्यं मयादत्तं मम शांति

प्रदो भव ॥ २ ॥ रक्त प्रवालसंकाश जपाकुसुमसन्निभ । महीसुत महाबाहो गृहाणार्घ्यं नमोस्तु
ते ॥ ३ ॥ इत्यर्घ्यं दत्वा पूर्वोक्तैर्नामभि प्रणम्य । एकविंशतिप्रदक्षिणाः कृत्वा साष्टांगं प्रणमेत् ।
ततः खदिरांगारकेन स्वपुरतः ऋणरेखात्रयं समं कृत्वा वामपादेन प्रमार्जयेत् । तत्र मंत्रौ । दुःखदौ
र्भाग्य नाशाय पुत्रसंतानहेतवे । कृतरेखात्रयं वामपादेनैतत्प्रमार्ज्म्यहम् ॥ १ ॥ ऋणदुःखविना
शाय मनोभीष्टार्थसिद्धये । मार्जयाम्यसितारेखास्तिस्रो जन्मत्रयोद्भवाः ॥ २ ॥ ततः पुष्पांजलिं
गृहीत्वा प्रार्थयेत् । धरणीगर्भसंभूतं विद्युत्तेजः समप्रभम् । कुमारं शक्तिहस्तं च मंगलं प्रणमाम्य
हम् ॥ १ ॥ ऋणहर्त्रे नमस्तुभ्यं दुःखदारिद्र्यनाशिने । नमामि द्योतमानाय सर्वकल्याणका
रिणे ॥ २ ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः । सुखं यांति यतस्तस्मै नमो धरजिसूनवे ॥ ३ ॥
यो वक्रगतिमापन्नो नृणां विघ्नं प्रयच्छति । पूजितः सुखसौभाग्यं तस्मै क्ष्मासूनवे नमः ॥ ४ ॥
प्रसादं कुरु मे नाथ मंगलप्रद मंगल ॥ मेषवाहन रुद्रात्मन् पुत्रान्देहि धनं यशः ॥ ५ ॥ अंगारक
महाभाग भगवन्भक्तवत्सल । त्वां नमामि ममाशेषमृणमाशु विमोचय ॥ ६ ॥ ऋणरोगादिदा
रिद्र्यं ये चान्ये चापमृत्यवः । भयक्लेशमनस्तापा नश्यंतु मम सर्वदा ॥ ७ ॥ अतिवक्र दुराराध्य

व्र० ॥१२८॥

भोगमुक्तजिवात्मनः। तुष्टो ददासि साम्राज्यं रुष्टो हरसि तत्क्षणात् ॥ ८ ॥ विरंचिशक्रविष्णूनां मनुष्याणां तु का कथा। तेन त्वं सर्वसत्त्वेन महाराजो महाबलः ॥ ९ ॥ पुत्रान्देहि धनं देहि त्वामस्मि शरणं गतः। ऋणदारिद्र्यदुःखेन शत्रूणां च भयात्ततः ॥ १० ॥ इति प्रार्थ्य पुष्पांजलिं दद्यात्। ततो ब्राह्मणान्संपूज्य गुरवे दक्षिणां दत्त्वा पूजायां निवेदितान्नेन एकभक्तव्रतं कुर्यात्। एवं प्रतिभौमदिनं संवत्सरावधि कृत्वा समाप्ते व्रते उद्यापनं कुर्यात्। अथोद्यापनप्रयोगः। देशकालौ संकीर्त्य मम अभीष्टकामनासिद्ध्यर्थमाचरितभौमवारव्रतोद्यापनं करिष्ये। इति संकल्प्य। गणेशपूजनाद्याचार्यवरणांतं कर्म कुर्यात्। ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि स्वर्णमयीं भौमप्रतिमामुक्तलक्षणां वा त्रिकोणां संस्थाप्य पूर्वोक्तविधिना संपूज्य पुराणपठनादिना रात्रिं निनयेत्। ततः प्रातः स्नात्वा पुनः पूर्ववत् पूजां कृत्वा ऐशान्यां त्रिकोणे स्थंडिले अग्निं प्रतिष्ठाप्य। आज्यभागांते। ॐ अग्निर्मूर्द्धा० इति मंत्रेण पूर्वोक्तभौमगायत्र्या वा। गुडाज्यमिश्रिततिलद्रव्येण अष्टोत्तरशतं हुत्वा पूर्वोक्तैकविंशतिनामभिरष्टाष्टसंख्यया जुहुयात्। ततः सर्वतोभद्रमंडलदेवताभ्य एकैकाज्याहुतिं हुत्वा होमशेषं समाप्य पूर्वोक्तैरेकविंशतिनामभिः।

एकविंशतिब्राह्मणान्संपूज्य तेभ्यो रक्तचन्दनचर्चितान् गुडमिश्रिततिलचूर्णपूरितान् रक्तवस्त्रदक्षिणा सहितान् कलशान् यथाचारं दद्यात् । तत्र मंत्रः । मंगलः प्रतिगृह्णाति मंगलो वै ददाति च मंगलस्तारकोभाभ्यां मंगलाय नमोनमः ॥ १ ॥ ततः आचार्यं वस्त्रादिभिः संपूज्य तस्मै कलशयुतां प्रतिमां व्रतपूर्त्तये रक्तवर्णां सवत्सां धेनुं विभवे सति रक्तमनड्वाहं सोपस्करां शय्यां च दद्यात् । ततो गोधूमान्नरचितपदार्थेन पंचाशत् एकविंशतिं वा ब्राह्मणान् भोजयित्वा दक्षिणाभिः प्रतोष्य आशिषो गृहीत्वा बंधुभिः सह भुंजीत । इति स्कांदपाद्ममंत्रमहोदध्यादिप्रोक्तं मंगलव्रतविधानं तदुद्यापनं च समाप्तम् ॥ अथ शनैश्वरव्रतोद्यापनम् ॥ श्रावणशुक्लाद्यशनिवारे शनैश्वरव्रतम् । तत्र विधिः । प्रातः शमीकाष्ठेन दंतधावनं कृत्वा नद्यादौ स्नात्वा नित्यकर्मनिर्वर्त्य पूजासामग्रीमादाय शमीमूलमथवा अश्वत्थमूलं गत्वा तत्र मृदा वेदिं विधाय तत्र तिलैर्धनुषाकारं मण्डलं विलिख्य तत्र कृष्णायस्सनिर्मितां महिषासनां द्विभुजां दंडपाशधरां शनैश्वरप्रतिमां संस्थाप्य कृष्णवस्त्रवेष्टितां च कृत्वा संकल्पं कुर्यात् । तद्यथा । देशकालौ संकीर्त्य मम समस्तपीडादुःखदौर्भाग्यनिरसनपूर्वकमतुलसुखपुत्रपौत्रधनधान्याद्यभिवृद्धिद्वारा श्रीशनैश्वरप्रीतये शनैश्वरव्रतं

करिष्ये इति संकल्प्य गणेशं संपूज्य प्राणप्रतिष्ठां कृत्वा ध्यायेत् । तत्र ध्यानम् । शनैश्वरं दीर्घदेहं दंडपाशधरं तथा । पिंगाक्षं स्थूलदेहं च ध्यायामि रविनंदनम् ॥ १ ॥ इति ध्यात्वा ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये । शंयोरभिस्रवंतुनः ॥ १ ॥ शनैश्वराय नमः इतिमंत्रेण षोडशोपचारैः संपूजयेत् । पूजने तिलतैलेन पुरुषसूक्तेन पूर्वोक्तमंत्रेण वा अभिषेकं कृत्वा कृष्णवस्त्रेणसप्ततंतुभिश्चसंवेष्ट्य कृष्णपुष्पैः संपूज्य सप्त प्रदक्षिणाः सप्त नमस्कारांश्च कृत्वा प्रार्थयेत् । नमः कृष्णाय नीलाय शितिकंठनिभाय च । नमः परुषगात्राय स्थूलरोम्णे नमोनमः ॥ १ ॥ तपसा दग्धदेहाय नित्यं योगरताय च । नमस्ते ज्ञाननेत्राय काश्यपायार्कसूनवे ॥ २ ॥ इत्यादिशनैश्वरस्तोत्रेण स्तुत्वा एकं विप्रं संपूज्य प्रस्थतिलानां वायनं सदक्षिणं दत्त्वा देवं विसृज्य गृहमागत्य तिलपिष्टमिश्रितान्नं ब्राह्मणाय दत्त्वा स्वयं तथैव भुंजीत । एवंप्रकारेण वर्षपर्यंत त्रिंशच्छनिवासरपर्यंतं वा प्रतिशनिवारं कृत्वा असामर्थ्ये तु श्रावणशनिवासरेषु वा कृत्वा अंत्ये उद्यापनं कुर्यात् । ततः प्रयोगः । देशकालौ संकीर्त्य मम आयुरारोग्यसुखसंपत्प्राप्तिपूर्वकमभीष्टमनोरथसिद्धिद्वारा श्रीशनैश्वरप्रीतये आचरितशनैश्वरव्रतोद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतो

भद्रमध्ये ताम्रकलशोपरि सुवर्णमये शमीपत्रे सौवर्णीं शनैश्चरप्रतिमां संस्थाप्य । ॐ शन्नोदेविरभि
ष्टयऽआपोभवंतुपीतये । शंयोरभिस्रवंतुनः ॥ इति मंत्रेणावाह्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य
पूर्वोक्तस्तोत्रेण प्रार्थयेत् । ततः अग्निं प्रतिष्ठाप्य आज्यभागांते शमीसमित्तिलाज्यद्रव्यैः शन्नोदेवी
रिति मंत्रेणाष्टोत्तरशतं जुहुयात् । ततः सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समाप्य
सप्त द्विजान्संपूज्य तेभ्यो दक्षिणायुतानि सप्त तिलपात्राणि दत्त्वा आचार्याय पीठं गां च दत्त्वा
तिलमिश्रितपक्वान्नेन यथाशक्ति ब्राह्मणान् संभोज्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ इति स्कंद
पुराणोक्तं शनिवारव्रतोद्यापनं समाप्तम् ॥ ॥ अथ व्यतीपातव्रतोद्यापनम् ॥ मार्गशीर्षादिशुभ
मासे यदा व्यतीपातयोगस्तद्दिने प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा देशकालौ संकीर्त्य । मम
समस्तपापक्षयार्थं धर्मार्थकाममोक्षप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्दशवर्षाचरितव्यतीपातव्रतो
द्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रे
ब्रह्मादिदेवताः संपूज्य तन्मध्ये पंचरंगोपेतकमले कलशस्थापनविधिना शर्करापूरितं ताम्रकलशं
प्रतिष्ठाप्य तत्र तंडुलपूरिते ताम्रपात्रे अष्टादशभुजायुतां सौवर्णीं व्यतीपातप्रतिमां प्रतिष्ठाप्य पुरुषसू

केन षोडशोपचारैः संपूज्य पंचरत्नान्वितपुष्पांजलिं दद्यात् । तत्र मंत्रः । नमस्तेस्तु व्यतीपात सोमसूर्यसुत प्रभो। यद्दानादिव्रतं किंचित्तदनंतमिहास्तु मे ॥ १ ॥ इति प्रार्थ्य अर्घ्यं दद्यात् । तत्र मंत्रः । गृहाणार्घ्यं व्यतीपात सोमसूर्यसुत प्रभो । सप्तजन्मकृतं पापं त्वत्प्रसादात्प्रणश्यतु ॥ १ ॥ ततः सुवर्णादि दत्त्वा पुराणकथाश्रवणादिना रात्रिं नीत्वा प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते क्षीरवृक्षसमित्तिलपायसाज्यद्रव्यैः ॐ व्यतीपाताय स्वाहा इति नाममंत्रेण अष्टोत्तर शतं जुहुयात् । ततः सर्वतोभद्रदेवताभ्यएकैकाज्याहुतिं हुत्वा होमशेषं समापयेत् ( पुराणांतरे तु इमंदेवा० इति मंत्रेण पूर्वोक्तद्रव्यैः सोमाय । आकृष्णेनरजसा० इति मंत्रेण सूर्याय होमः । इदंविष्णुर्विचक्रमे० इति मंत्रेण पायसेन विष्णवे च व्याहृतिभिः फलैर्होमश्च प्रोक्तः तदपि यथाशक्ति कार्यः ) ततः आचार्यं संपूज्य तस्मै सोपस्करां शय्यां फलशयुतां प्रतिमां च दद्यात् । तत्र मंत्रः । वंदे व्यतीपातमहं महांतं रवींदुसूनुं सकलेष्टसिद्ध्यै । समस्तपापस्य मम क्षयोस्तु पुण्यस्य वृद्धिर्मम सर्वदास्तु ॥ १ ॥ ततो व्रतपूर्तये पयस्विनीं धेनुमाचार्याय दत्त्वा त्रयोदश ब्राह्मणान् लड्डुपायसै र्भोजयित्वा तेभ्यः सुवर्णदक्षिणां दत्त्वा आशिषो गृहीत्वा बंधुभिः सह स्वयं भुंजीत । इति वाराह

नारदीयपुराणोक्तं व्यतीपातव्रतोद्यापनम् ॥ अथ धारणापारणाव्रतोद्यापनम् ॥ तद्व्रतं तु आषाढ
शुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतं मासचतुष्टयं मासं वा कार्यम् । तत्र एकस्मिन्दिने
उपवासः द्वितीयदिने भोजनमिति धारणंपारणम् । तत्र विधिः । एकादश्यां प्रातर्नद्यादौ स्नात्वा
नित्यकर्म कृत्वा देशकालौ संकीर्त्य मम बंधुवधादिजनितपापक्षयपूर्वकमुत्तमलोकप्राप्तिद्वारा श्रीपर
मेश्वरप्रीत्यर्थं धारणापारणाव्रतं करिष्ये इति संकल्प्य गणेशं संपूज्य विष्णुं पीठे ॐ नमो नारायणाय
इत्यष्टाक्षरमंत्रेण षोडशोपचारैः संपूज्य तद्दिने उपवासं कुर्यात् । ततो द्वादश्यां प्रातः स्नात्वा देवं
संपूज्य अष्टाक्षरमनुमष्टोत्तरशतं जप्त्वा तेनैवाऽष्टोत्तरशतमर्घ्यं दत्वा ब्राह्मणभोजनपुरःसरं मौनी स्वयं
भोजनं कुर्यात् । एवं मासचतुष्टयं मासं वा चरित्वा कार्तिकशुक्लैकादश्यामुद्यापनं कार्यम् ॥ अथो
द्यापनप्रयोगः ॥ देशकालौ स्मृत्वा मम सर्वविधपातकनिवृत्तिपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीप
रमेश्वरप्रीतये आचरितधारणापारणाव्रतोद्यापनं करिष्ये इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं
पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संकल्प्य तन्मध्ये ताम्रकलशे सौवर्णीं लक्ष्मीना
रायणप्रतिमाम् ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयः पार्थिवानिविममेरजाꣳसियोऽअस्कभायदुत्तरꣳसध

व्र० ॥१३१॥

स्थंविक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ १ ॥ इति मंत्रेण प्रतिष्ठाप्य । पुरुषसूक्तेन ॐ नमो नारायणाय इत्यनेन पंचामृतपुरः षोडशोपचारैः संपूज्य । रात्रौ कथाश्रवणादिना जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ॐ निषसीदतगणपतेगणेषुत्वा माहुर्विप्रयमंकवीनाम् । नऽऋतेत्यत्क्रियतेकिंचनारेमहामर्कं मघवंचित्रमर्च स्वाहा ॥ १ ॥ इति मंत्रेण तिलौदनेन १०८ । ॐ अरायिकाणेविकटेगिरिंगच्छसदान्वे । शिरिंबिठंस्यसत्त्वभिस्तेभिष्ट्वा चातयामसिस्वाहा ॥ १ ॥ इति मंत्रेण घृतौदनं १०८ ॐ नमोनारायणाय स्वाहा इत्यष्टाक्षरेण पायसं च प्रत्येकमष्टोत्तरशतं हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाहुतिं जुहुयात् । ततः आचार्यं वस्त्रादिभिः संपूज्य सोपस्करां प्रतिमां व्रतपूर्त्तये सवत्सां गां सोपस्करां शय्यां च दद्यात् । ततः प्रतिमासं पंचदश ब्राह्मणान् पायसाद्यन्नेन संतर्प्य दक्षिणां दत्त्वा आशिषो गृहीत्वा स्वयं भुंजीत । इदं व्रतं महापुण्यं तपसामुत्तमं तपः । तस्मात्त्वमपि राजेंद्र कुर्विदं विधिपूर्वकम् ॥ १ ॥ इति भविष्योत्तरोक्तं धारणापारणाव्रतोद्यापनम् ॥ अथ मासोपवासव्रतोद्यापनम् । तच्च आश्विन शुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतं मासोपवासं कृत्वा अंत्ये उद्यापनं कार्यम् । प्रत्यहं

त्रिकालस्नानं विष्णुमंत्रजपः विष्णुपूजनं तुलसीदलानामर्पणम् असदालापवर्जनं पुराणश्रवणं पठनं च ब्राह्मणपूजनं यथाशक्ति दानं च एवमादिनियमान् कुर्यात् । देशकालौ संकीर्त्य । मम समस्तपापक्षयपूर्वकधर्मार्थकाममोक्षप्राप्तिद्वारा श्रीमहाविष्णुप्रीत्यर्थम् आचरितमासोपवासव्रतो द्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतो भद्रे ब्रह्मादिदेवताः संपूज्य तत्र मध्ये ताम्रकलशोपरि सुवर्णमयीं लक्ष्मीनारायणप्रतिमां पीतकौ शेयवस्त्रयुग्मवेष्टितां संस्थाप्य । ॐ इदंविष्णुर्विचक्रमे० १ इत्यावाह्य पुरुषसूक्तेन द्वादशाक्षरमनुना च पंचामृतपुरःसरं षोडशोपचारैः कोमलतुलसीदलैश्च संपूज्य रात्रौ जागरणं कुर्यात् । ततः प्रातर्न द्यादौ स्नात्वा देवर्षिपितॄन्संतर्प्य नित्यकर्म समाप्य स्थंडिले अग्निं प्रतिष्ठाप्य आज्यभागांते पूर्वोक्तवैदिकमंत्रेण ॐ नमो भगवते वासुदेवाय स्वाहा इत्यनेन वा तिलाज्यपायसद्रव्यैरष्टोत्तरशतं हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समाप्य आचार्याय सोपस्करां प्रतिमां व्रतपूर्त्तये सवत्सां गां शय्यां च दत्त्वा वेदशास्त्रसंपन्नांस्त्रिंशद्ब्राह्मणान् पायसान्नेन संतर्प्य दक्षिणा वस्त्राभूषणयात्रादिभिः संपूज्य प्रार्थयेत् । भो द्विजा अनुमोदध्वं विष्णुलोकं प्रयाम्यहम् । ततो

व्र० ॥१३२॥

द्विजाः प्रतिवदेयुः । व्रजव्रज नरश्रेष्ठ विष्णुलोकमनामयम् । विमानं वैष्णवं दिव्यं शय्यायां पारि
कल्पितम् ॥ तेन विष्णुपदं याहि सच्चिदानंदरूपिणम् ॥ १ ॥ ततो दीनानाथान्प्रतोष्य बंधुभिः सह
स्वयं मौनी भुंजीत । अशक्तेन तु एतद्व्रतं कंदमूलफलपयोभक्षणादिना कर्तव्यम् । अनेन सर्व
पापमुक्तो भवति ॥ इति विष्णुरहस्योक्तं मासोपवासव्रतोद्यापनम् ॥ अथ सर्वसंक्रांतिव्रतो
द्यापनम् ॥ अयनसंक्रांतौ विषुवत्संक्रांतौ वा प्रातः शुक्लतिलैर्नद्यादौ स्नात्वा गोमयोपलिप्ते शुद्ध
देशे कुंकुमादिनाष्टदलं विरच्य पूजासामग्रीं संपाद्य देशकालौ संकीर्त्य मम अग्निष्टोमादिफलप्रा
प्तिपूर्वकसप्तजन्मधनधान्यपुत्रपौत्रविविधभोगप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् आचरिताऽमुकसंक्रां
तिव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः
पूर्वरचितपद्मे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि रक्तकौशेयवस्त्रं प्रसार्य तत्र कुंकुमा
दिनाऽष्टदलं विरच्य तन्मध्ये कर्णिकायां सुवर्णमयीं सूर्यप्रतिमां प्रतिष्ठाप्य ॐ आकृष्णेनरजसा० १
इति मंत्रेणावाह्य परितः पूर्वादिष्वष्टदिक्षु देवताः स्थापयेत् । तद्यथा । पूर्वे आदित्याय नमः १
( आग्नेय्याम् ) सोमार्चिषे नमः २ ( याम्याम् ) ऋङ्मंडलाय नमः ३ ( नैर्ऋत्ये ) सवित्रे नमः ४

( पश्चिमे ) तपनाय नमः ५ ( वायव्याम् ) मित्राय नमः ६ ( उत्तरे ) मार्तंडाय नमः ७ ( एशान्याम्) विष्णवे नमः ८ इति संस्थाप्य पुरुषसूक्तेन संपूज्य । चंदनोदकपुष्पैरर्घ्यं दद्यात् । तत्र मंत्रः । विश्वाय विश्वरूपाय विश्वधाम्ने स्वयंभुवे । नमोनंत नमो धात्रे ऋक्सामयजुषां पते ॥ १ ॥ ततः अग्निं प्रतिष्ठाप्य आज्यभागांते पूर्वोक्तमंत्रेणाष्टोत्तरशतं पायसहोमं कृत्वा ब्रह्मादिदेवताभ्यश्चैकैकाहुतिं जुहुयात् । ततो होमं समाप्य आचार्यं वस्त्रादिभिः संपूज्य सोपस्करां प्रतिमां सुवर्णकमलं च दत्त्वा सवत्साः सोपस्कराः सप्त गाः अशक्तस्तु कपिलामेकां वा दद्यात् । ततो हैमीं रौप्यां वा ताम्रमयीं वा पैष्टीं तिलैर्वा पृथिवीं विधाय सौवर्णसूर्यसहितां दद्यात् । ततः सोदकं कुंभं तिलपात्रं ससुवर्णं कस्मैचिद्ब्राह्मणाय दत्त्वा द्वादश ब्राह्मणान् पायसेन भोजयित्वा तेभ्यो जलपूरितान्द्वादश घटान् सदक्षिणाकान्दत्त्वा तैराशिषो गृहीत्वा स्वयं भुंजीत । इति हेमाद्रौ मत्स्यपुराणोक्तं सर्वसंक्रांतिव्रतोद्यापनम् ॥ अथ तांबूलव्रतोद्यापनम् ॥ शुभमासे शुभदिने वैवाहिकनक्षत्रे च अथवा कार्तिकशुक्लैकादश्यां पौर्णमास्यां वा प्रातः स्नात्वा देशकालौ संकीर्त्य मम आनंददीर्घायुष्यसौमनस्यपुष्टिसौभाग्यधन धान्यपुत्रपौत्रविद्यालाभादिप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् आचरिततांबूलव्रतोद्यापनं

करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कुर्यात् । ततः सर्वतोभद्रमण्डले ब्रह्मादिदेवताः संपूज्य तत्र रौप्यमयं ताम्रमयं वा कलशं यथाविधि संस्थाप्य तत्र सौवर्णीः लक्ष्मी नारायण २–उमामहेश्वर २–सावित्रीब्रह्म २–रतिकामदेव २–ऋद्धिसिद्धिसहितगणेशानां २ प्रतिमाः प्रतिष्ठाप्य अथवा रौप्यमये शेषे सौवर्णीं नागकन्यायुतां लक्ष्मीनारायणप्रतिमां संस्थाप्य शिवादिदेवांस्तत्तन्मंत्रेणावाह्य तत्परितः इंद्रादिलोकपालांश्चाऽऽवाह्य पुरुषसूक्तेन पंचामृताभिषे कपुरः सरं षोडशोपचारैः संपूजयेत् । तत्र नानाविधभक्ष्यभोज्यघृतयुतपायसोपहारं निवेद्य देवाग्रे द्रोणपरिमितपूगानि यथाशक्ति वा नागपर्णीयुतं संथाप्य द्वादशनामभिः पूजयेत्प्रणमेच्च तद्यथा । ॐ पुरुषोत्तमाय नमः १ शार्ङ्गपाणये० २ गरुडध्वजाय० ३ अनंताय० ४ यज्ञपुरुषाय० ५ पुंडरीकाक्षाय० ६ नित्याय० ७ वेदगर्भाय० ८ गोवर्धनाय० ९ सुब्रह्मण्याय० ११ शौरिणे ११ ईश्व राय नमः १२ ततो दश नव वा सुवर्णरूप्यताम्रपित्तलान्यतमपर्णस्थापनपात्राणि अभावे कुंभान् वा तांबूलद्रव्यपूगयुतानि तावंति तीक्ष्णचूर्णपात्राणि तथा तीक्ष्णानि पूगीफलप्रस्फोटनशस्त्राणि च कानि चित्नागवल्लीपात्राणि तथा एलालवंगादिमुखवासद्रव्याणां पात्राणि तत्तद्द्रव्यपूरितानि च नव वंशशू

र्पनवके निधाय वस्त्रद्वयेन संवेष्ट्य सप्तधान्योपरि देवाग्रे निधाय तत्र नागरूपं ध्यात्वा संपूजयेत् प्रार्थयेच्च । तत्र मंत्रः । नवनागमहाराज बल्या तव प्रपूजनात् । ईप्सितं देहि मे शीघ्रं सर्वसौख्यं सदा प्रभो ॥ १ ॥ इति प्रार्थ्य गीतवादित्रपुराणपठनादिना रात्रिं निनयेत् । ततः प्रातर्देवं संपूज्य स्थंडिलेऽग्निं प्रतिष्ठाप्य आज्यभागांते ॐ अतोदेवा० १ इति मंत्रेण पायसाज्यद्रव्येणाऽष्टोत्तरसहस्रं हुत्वा पूर्वोक्तशिवादिभ्यस्तत्तन्नाममंत्रेण पुरुषोत्तमादिद्वादशनामभिश्च समस्तव्याहृतिमंत्रेण च पलाशसमित्तिलव्रीहिपायसद्रव्यैः प्रत्येकमष्टोत्तरशतमष्टाविंशतिसंख्यया वा होमं कुर्यात् । ततः सर्वतोभद्रदेवताभ्य एकैकाज्याहुतिं हुत्वा होमशेषं समाप्य दंपतिनवकं वस्त्रादिना संपूज्य पूर्वस्थापित शूर्पनवकं तेभ्यो दद्यात् । तत्र मंत्रः । तांबूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् । अस्य प्रदानाद्देवेश सफलं मेऽभिकांक्षितम् ॥ १ ॥ ततस्तेभ्यो नव गोदानानि तदभावे तन्मौल्यं वा दक्षिणात्वेन दत्त्वा देवं प्रार्थयेत् । तांबूलदानमाहात्म्यात्प्रीतो भव जनार्दन । संपूर्णं कुरु मे देव कांक्षितं पुरुषोत्तम ॥ १ ॥ इति प्रार्थ्य सोपस्करां प्रतिमां कपिलां गां च आचार्याय दत्त्वा ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणायुतानि तांबूलानि दत्त्वा स्वयं भुंजीत । ( तांबूललक्षणम् ) द्वात्रिंशत्पत्रकैर्युक्तं

व्र०
॥१३४॥

पूगीफलसमन्वितम् । एलालवंगकर्पूरैर्युक्तं तांबूलमुच्यते ॥ १ ॥ यथालाभं भवेद्वापि देयं द्विजवराय च । द्विजाभावे सुवासिन्यै तदभावे कुमारिकाम् ॥ २ ॥ आनंदो दीर्घमायुष्यं सौमनस्यं च पुष्टितः । सौभाग्यं च धनादिभ्यो विद्यालाभस्तथैव च ॥ ३ ॥ एतत्तु पंचकं राजंस्तांबूलाल्लभ्यते नरैः । मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥ ४ ॥ फलेन तृप्यते ब्रह्मा पत्रेण भगवान्हरिः। चूर्णमीश्वरतृप्त्यर्थं खदिरः कामतृप्तये ॥ ५ ॥ कर्पूरैलालवंगादिजातीपत्रफलैस्तथा । इंद्राद्या लोकपालाश्च संतुष्टाश्च भवंति हि ॥ ६ । वारिदः सुखमाप्नोति राज्यं प्राप्नोति चान्नदः ॥ दीपदश्चक्षुराप्नोति त्रयं तांबूलदानतः ॥ ७ ॥ इति वायुपुराणभविष्योत्तरोक्तं तांबूलव्रतोद्यापनम् ॥ ॥ अथ मौनव्रतोद्यापनम् ॥ चातुर्मास्ये मौनव्रतं प्रगृह्य चतुर्मासं वत्सरं वा यावज्जीवं वा यथाशक्ति कृत्वा कार्तिकशुक्लैकादश्यां पूर्णिमायां वा उद्यापनं कुर्यात् ॥ तत्र प्रयोगः । प्रातर्नद्यादौ स्नात्वा देवर्षिपितॄन्संतर्प्य नित्यकर्म कृत्वा चतुर्द्वारयुतं तोरणपताकादिसहितं पट्टवस्त्रादिभूषितं मंडपं कुर्यात् । तस्य द्वारचतुष्टयेषु क्रमेण । पुण्यशीलं १ सुशीलं २ जयं ३ विजयं ४ च मृन्मयान् गदाद्यायुधसहितान्संस्थाप्य संपूज्य मण्डपमध्ये वेद्यां सर्वतोभद्रं रचयेत् । ततो देशकालौ संकीर्त्य मम सर्ववि

धपातकनिवृत्तिपूर्वकविष्णुलोकप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थम् आचरितमौनव्रतोद्यापनं करिष्ये ।
इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य ताम्र
कलशोपरि सौवर्णीं विष्णुप्रतिमां संस्थाप्य तदग्रे गरुडचिह्नांकितां घंटां च संस्थाप्य पुरुषसूक्तेन
षोडषोपचारैः पूजयेत् । ततो रात्रौ जागरणं कृत्वा प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते ॐ अतो
देवाऽअवन्तुनोयतोविष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिःस्वाहा । इदं विष्णवे १ इति मंत्रेणाष्टोत्तरशतं
घृताहुतीर्दत्त्वा मंडलदेवताभ्यश्चैकैकाज्याहुतिं जुहुयात् । ततो होमांते आचार्यं संपूज्य पीठदानं
घंटादानं च दत्त्वा व्रतपूर्त्तये सवत्सां गामाचार्याय दद्यात् । ततो दीपदानं कृत्वा यथाशक्ति ब्राह्मणान्
भोजयेत् ॥ इदं व्रतं मया पूर्वं कृतमुत्पत्तिहेतवे । तेन व्रतप्रभावेण सृष्ट्युत्पत्तिर्मया कृता ॥ १ ॥
कर्तव्यं तु प्रयत्नेन सर्वकामार्थसिद्धये । य इदं कुरुते वत्स स साक्षान्मामकीतनुः ॥ २ ॥ इति
ब्रह्मांडपुराणोक्तं मौनव्रतोद्यापनम् ॥ अथ लक्षपद्मव्रतोद्यापनम् ॥ गुरुशुक्रास्तरहिते शुभे मासे शुक्ल
पक्षे शुभदिने च देशकालौ संकीर्त्य मम सर्वपातकनिवृत्तिपूर्वकपुत्रपौत्रधनधान्यसौभाग्यादि
प्राप्तिद्वारा श्रीसूर्यनारायणप्रीतये आचरितलक्षपद्मव्रतोद्यापनं करिष्ये । इति संकल्प्य गणेशपू

जादि पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ताम्रकलशोपरि सौवर्णीं सूर्यप्रतिमां सुवर्णमयं पद्मं च संस्थाप्य रक्तपट्टवस्त्ररक्तचंदनरक्तपुष्पादिभिः पंचामृतपुरःसरैः षोडशोपचारैः पुरुषसूक्तेन संपूजयेत् । ततः अग्निं प्रतिष्ठाप्य आज्यभागांते गायत्रीमंत्रेण तिलाज्यपायसद्रव्यैरष्टोत्तरसहस्रमष्टोत्तरशतं वा होमं कृत्वा होमांते आचार्यं संपूज्य । ॐ अतोदेवाऽअवन्तुनोयतोविष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः १ इति मंत्रेण सोपस्करां प्रतिमां पद्मं च दत्त्वा व्रतपूर्त्तये सवत्सां गां च दद्यात् । ततः शर्करापायसैर्यथाशक्ति ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणां दत्त्वा प्रदक्षिणीकृत्य मूर्ध्नि कृतांजलिना प्रणम्य बंधुभिः सह स्वयं भोजनं कुर्यात् । एतत्ते व्रतमाख्यातं स्त्रीणां कामफलाप्तये ॥ पुत्रपौत्रादिसंतानवृद्ध्यर्थं कुरुनंदन ॥ या नारी कुरुते भक्त्या हरिस्तस्याः प्रसीदति ॥ १ ॥ इति सौरपुराणोक्तं लक्षपद्मलेखनव्रतोद्यापनम् ॥ अथ लक्षपूजाविधानम् ॥ तत्रादौ शिवस्य नानापुष्पादिद्रव्यैर्लक्षपूजाविधानं तदुद्यापनं च लिख्यते । स्कंदपुराणे । श्रावणे माधवे वोर्जे विदध्याल्लक्षपुष्पिकाम् । एकैकं मूलमंत्रेण रुद्रमंत्रेण वा पुनः ॥ १ ॥ मूलमंत्रः ( नमः शिवाय इति ) रुद्रमंत्रः ( नमो भगवते रुद्राय इति ) अथवा रुद्रसूक्तेन सहस्रेणाथवा व्रती । अर्पयेत्पार्वतीनाथे नमो रुद्राय

वा जपन् ॥ २ ॥ अनेनैव प्रकारेण लक्षपूजां समर्पयेत् । लक्षपुष्पैः पूजनेन प्रसन्नः शंकरो भवेत् ॥३॥ ( ब्रह्मांडे ) चंपकैर्मल्लिकापुष्पैर्जातीकिंशूकपाटलैः । द्रोणपुष्पैः कदंबैश्च बिल्वशाखादलैस्तथा ॥ ४ ॥ नागवल्लीदलैर्वापि रत्नैर्नानाविधैरपि । तत्तत्कालोद्भवैः पुष्पैः पल्लवैः कोमलैरपि ॥ ५ ॥ धान्यैश्च विविधैः शुद्धैरखंडैर्व्रीहितंडुलैः । लक्षपूजा प्रकुर्वीत नामभिर्मूलमंत्रतः ॥ ६ ॥ अथोद्यापनप्रयोगः । माघादिपुण्यमासेषु चातुर्मास्ये वा श्रावणे विशेषेण चंद्रतानुकूले शुभदिने शुभतिथिवासरे चतुर्द्वारयुतं मंडपं कृत्वा तत्र वेदिं विरच्य लिंगतोभद्रमंडलं कुर्यात् । ततः प्रातर्नद्यादौ स्नात्वा नित्यकर्म निर्वर्त्य देशकालौ संकीर्त्य मम सर्वविधपातकनिवृत्तिपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीभवानीशंकरप्रीतये आचरितं लक्षपुष्पपूजाविधानं तत्संपूर्णफलावाप्तये तदुद्यापनाख्यं कर्म करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः आचार्यो लिंगतोभद्रे देवताः संपूज्य तन्मध्ये ताम्रकलशं यथाविधि स्थापयेत् । अथवा वेद्यैशान्यां तंडुलकैः कैलासं कृत्वा तस्योपरि कलशस्थापनं कृत्वा तत्र पट्टवस्त्रं प्रसार्य सौवर्णं शिवम् ॐ नमः शंभवाय च० इति मंत्रेण प्रतिष्ठाप्य तद्वामे सौरीम् ॐ गौरीर्मिमाय० १ इति मंत्रेण

तत्पुरतो राजतं वृषभं च संस्थाप्य तद्दक्षिणे सौवर्णं ब्रह्माणम् उत्तरे विष्णुं च प्रतिष्ठापयेत् ।
ततः तत्तन्नाममंत्रेणाऽऽवाह्य परितो वक्ष्यमाणदेवता आवाहयेत् । तद्यथा । ॐ सावित्र्यै नमः १
पार्वत्यै नमः २ लक्ष्म्यै नमः ३ गणपतये नमः ४ स्कंदाय० ५ भैरवाय० ६ चंडाय० ७
गरुडाय० ८ इति परिवारदेवानावाह्य रुद्राध्यायेन पुरुषसूक्तेन वा पंचामृतपुरःसरं षोडशोप
चारैः संपूजयेत् । ततः । विरूपाक्ष महादेव विश्वरूप महेश्वर । मया कृतां लक्षपूजां गृहीत्वा
वरदो भव ॥ १ ॥ मृत्युंजयाय यज्ञाय देवदेवाय शंभवे । आश्रितेशाय शर्वाय महा
देवाय ते नमः ॥ २ ॥ नमः शिवाय शांताय सगणाय ससूनवे । सर्वेश्वराय देवाय कारणत्रय
हेतवे ॥ ३ ॥ ततो दशैकं वा सुवर्णपुष्पं लक्षबिल्वार्पणे सौवर्णं बिल्वपत्रं च समर्प्य पुराणपठ
नादिना रात्रौ जागरणं कृत्वा प्रभाते पुनः संपूज्य स्थंडिले अग्निं प्रतिष्ठाप्य आज्यभागांते पाय
साज्यतिलैः येन मंत्रेण पुष्पाद्यर्पणं कृतं तन्मंत्रेण तद्दशांशतो होमस्तद्दशांशेन तर्पणं तद्दशां
शेन मार्जनं च कुर्यात् । अशक्तस्तु दशसहस्रमष्टोत्तरसहस्रं वा हुत्वा परिवारदेवताभ्यश्च तिला
ज्यैरष्टाविंशतिं प्रत्येकं जुहुयात् । ततो लिंगतोभद्रदेवताभ्य एकैकाज्याहुतिं हुत्वा होमांते सगणं

शिवं संपूज्य कर्पूरेण नीराजनं कृत्वा त्रिः परिक्रम्य साष्टांगं प्रणमेत् । ततः आचार्यं वस्त्राभूषणैः संपूज्य अन्यानपि ब्राह्मणान् यथाशक्ति गोभूहिरण्यवस्त्राद्यैः पूजयेत् । ततः सोपस्करां प्रतिमां व्रतपूर्त्तये गोमिथुनं च आचार्याय प्रतिपाद्य यथाशक्ति ब्राह्मणान् भोजयित्वा आशिषो गृह्णीयात् । ततः । सभार्यो यजमानो द्विजैः सह शिवालये गत्वा पंचामृतेन शिवं संस्नाप्य रुद्राध्यायेनाभिषेकं कृत्वा सुवर्णपुष्पैर्ऋतुकालोद्भवपुष्पैश्च वस्त्रयुग्मेन च संपूज्य नीराजनं कृत्वा त्रिः परिक्रम्य साष्टांगं प्रणम्य क्षमापयेत् । तत्र मंत्रः । महादेव जगन्नाथ भक्तानां कार्यकारक । त्वत्प्रसादहं याचे शीघ्रं कार्यप्रदो भव ॥ १ ॥ इति प्रार्थ्य बंधुभिः सह भुंजीत । अनेनैव विधानेन लक्षपूजां करोति यः । पुत्रपौत्रप्रपौत्रैश्च राज्यं प्राप्नोति शाश्वतम् ॥ १ ॥ इति स्कांदब्रह्मांडादिपुराणोक्तं लक्षपुष्पबिल्वपत्रादिपूजोद्यापनम् ॥ अथ विष्णुलक्षपुष्पतुलस्यादिपूजाव्रतोद्यापनम् ॥ ( अग्निपुराणे ) चातुर्मास्ये तु संप्राप्ते लक्षपूजां समाचरेत् । माघादिपुण्यमासेषु लक्षपूजा हरेः स्मृता ॥ १ ॥ यद्यदृतौ भवेत्पुष्पं विष्णवे तत्तदर्पयेत् । अतसी तुलसी धात्री पद्मं दूर्वांकुरस्तथा ॥ २ ॥ करवीरं कर्णिकारं शतपत्रं च केतकम् । चंपकं मोगरं चैव सौवीरं कनकं तथा ॥ ३ ॥

म० ॥१३७॥

जातीपुष्पं पाटलकं पुन्नागं च कदंबकम् । बादरं चामलं पूगं फलैरन्यैश्च पूजयेत् ॥ ४ ॥ सुगंधैर्ऋतुसंभूतैः शस्तैः पादपपल्लवैः । यद्यत्पूजयते पुष्पं तत्स्वरूपं हिरण्मयम् ॥ ५ ॥ कारयेच्छतके चैकं सहस्रे वापि कारयेत् । लक्षे वा दापयेद्धीमान्यथावित्तानुसारतः ॥ ६ ॥ विष्णोर्नाम सहस्रेण गायत्र्या मूलमंत्रतः । सहस्रं द्विसहस्रं वा त्रिसहस्रं यथाविधि ॥ उपक्रमदिने याव त्प्रत्यहं तावती भवेत् ॥ ७ ॥ अथोद्यापनप्रयोगः ॥ वैशाखे माघे वा कार्त्तिके गुरुशुक्रास्तरहिते शुक्लपक्षे शुभदिने मण्डपं कृत्वा प्रातर्नद्यादौ स्नात्वा नित्यकर्म समाप्य । देशकालौ संकीर्त्य । मम समस्तपापनिवृत्तिपूर्वकधर्मार्थकाममोक्षफलावाप्तिद्वारा श्रीलक्ष्मीनारायणप्रीत्यर्थम् आचरि ततुलस्यादिलक्षपूजाव्रतोद्यापनं करिष्ये । इति संकल्प्य । गणेशपूजनाद्याचार्यवरणांतं कर्म कुर्यात् । ततो वेदिकायां सर्वतोभद्रे ब्रह्मादिदेवान्संपूज्य तन्मध्ये तंडुलैः श्वेतद्वीपं कृत्वा तत्र ताम्रकलशं संस्थाप्य तदुपरि पीतपट्टवस्त्रं प्रसार्य कुंकुमादिना अष्टदलं कृत्वा तन्मध्ये सौवर्णं नारायणं लक्ष्मी युतं संस्थाप्य तत्पुरतः राजतं गरुडं सौवर्णं तुलस्या आलवालं पत्रं वा पुष्पार्पणे पुष्पं च स्थाप येत् । ततः ( ऐशान्याम् ) ॐ शंखाय नमः १ ( आग्नेय्याम् ) ॐ चक्राय नमः २ ( नैर्ऋत्याम् ) गदायै

नमः ३ ( वायव्याम् ) पद्माय नमः ४ इत्यायुधानि प्रतिष्ठाप्य पूर्वादिदिक्षु इंद्रादिलोकपालांश्च संस्थापयेत् । ततः पुरुषसूक्तेन पंचामृतपुरःसरं षोडशोपचारैः संपूज्य नानास्तोत्रैः प्रार्थयेत् । ( गरुडप्रार्थना ) सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शांतिं प्रयच्छ मे ॥ १ ॥ ततः पुराणकथाश्रवणादिभी रात्रौ जागरणं कृत्वा प्रभाते पुनः संपूज्य स्थंडिलेऽग्निं प्रतिष्ठाप्य आज्यभागांते तुलस्याद्यर्पणमंत्रेण अथवा ॐ नमो नारायणाय स्वाहा इति विष्णुमंत्रेण विष्णुसहस्रनामभिर्वा मधुलाजमिश्रिततिलपायसघृतचरुद्रव्यैस्तुलस्याद्यर्पणदशांशेन अथवा अष्टोत्तरसहस्रं होमं कृत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाज्याहुतिं हुत्वा होमशेषं समापयेत् । ततः आचार्यं वस्त्रा भूषणादिभिः संपूज्य सोपस्करां प्रतिमां दद्यात् । तत्र मंत्रः । जलशायी ब्रह्मपिता यद्गर्भे सचराचरम् । अनंतभोगशयनः प्रीयतां मे जनार्दनः ॥ १ ॥ ततोऽन्येभ्योपि ब्राह्मणेभ्यो दक्षिणां दत्त्वा व्रतपूर्त्तये सवत्सां पयस्विनीं गां सोपस्करां शय्यां च आचार्याय दत्त्वा ब्राह्मणसहस्रमष्टोत्तरशतं वाष्टाविंशतिं च भोजयेत् । ततस्तेभ्यो दक्षिणां दत्त्वा आशिषो गृहीत्वा बंधुभिः सह भोजयेत् ॥ एवमेव विधानेन गणेशांबिकयोर्नृप । तत्तन्मंत्रेण पूजा तु तत्तन्नामसहस्रकैः ॥ १ ॥ गणेशे लड्डुके

होमं पंचखाद्यैरथापि वा । पायसेन तु देव्याश्च तिलैर्वा केवलैरपि ॥ २ ॥ एवं कृत्वा विधानेन स्वर्गलोके महीयते । होमभस्म समादाय रक्षणं त्वात्मनश्चरेत् ॥ ३ ॥ ब्रह्मराक्षसभूतानि पिशाच ग्रहराक्षसाः । पीडां न तत्र कुर्वंति होमभस्म तु यत्र वै ॥ ४ ॥ सर्पादिबाधके प्राप्ते गर्भिण्याश्चावि निर्गमे । भस्मप्रक्षेपमात्रेण सर्वं नश्येद्भयं नृणाम् ॥ ५ ॥ इत्यग्निपुराणभविष्योत्तरप्रोक्तं विष्णोस्तु लसीपुष्पादिलक्षार्पणोद्यापनम् ॥ अथ शिवादिदेवानां लक्षनमस्करात्मकं व्रतं लिख्यते ॥ ( भविष्ये ) वसिष्ठ उवाच । ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छसि । तदा लक्षनमस्कारव्रतं कुरु महीपते ॥१॥ चातुर्मास्ये तु संप्राप्ते केशवे शयनं गते । आषाढस्य सिते पक्षे एकादश्यां समारभेत् ॥ कार्त्तिकस्य सिते पक्षे पौर्णमास्यां समापयेत् ॥ २ ॥ इति । अथवा मार्गशीर्षे माघे वा चैत्रे वैशाखे वा पूर्णिमायां समापयेत् । अथ प्रयोगः । देशकालौ संकीर्त्य ममानेकजन्मोपार्जितनानाविधपात कशमनपूर्वकातुलभोगप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शिवस्य वा विष्णोरमुकदेवस्येति वा लक्षन मस्कारव्रतं करिष्ये । इति संकल्प्य तुलस्यग्रे अश्वत्थमूले गंगातीरे वा गवां गोष्ठे वान्यत्र शुभ स्थले यद्देवताप्रीतये व्रतं तद्देवं पीठे पुरुषसूक्तेन संपूज्य । नमोस्त्वनंताय० इत्यादिना स्तुत्वा तद्देवता

नाममंत्रेण तद्देवताप्रकाशवैदिकमंत्रेण मूलमंत्रेण वा नमस्कारान् कृत्वा समाप्तवुद्यापनं कुर्यात् ॥ अथोद्यापनप्रयोगः । देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् आचारितलक्षनमस्कारव्रतोद्यापनं करिष्ये । इति संकल्प्य । गणेशपूजनाद्याचार्यवरणांतं कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि सौवर्णीं देवताप्रतिमां तद्देवतामंत्रेण संस्थाप्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य विशेषार्घ्यत्रयं दद्यात् । तत्र मंत्रः । देवदेव जगन्नाथ सर्वक्रतुफलप्रद । व्रतेनानेन संतुष्टो गृहाणार्घ्यं मयार्पितम् ॥ १ ॥ ततोऽग्निं प्रतिष्ठाप्य आज्यभागांते प्रधानदेवतायै तन्नाममंत्रेणाष्टोत्तरशतं पुरुषसूक्तेन च सप्तावृत्त्या चरुतिलव्रीहिपलाशसमित्सर्पिर्द्रव्यैर्होमं कृत्वा ब्रह्मादिदेवताभ्यश्चैकैकाज्याहुतिं जुहुयात् । ततः आचार्यं वस्त्रादिभिः संपूज्य सोपस्करां प्रतिमां सवत्सां गां च दत्त्वा अष्टोत्तरशताधिकद्विजान् यथाशक्ति वा भोजयेत् ॥ इति लक्षनमस्कारव्रतोद्यापनम् ॥ अथ लक्षप्रदक्षिणाव्रतोद्यापनम् । ( स्कांदे ) ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छति । लक्षप्रदक्षिणा नाम व्रतं कुर्यान्महीपते ॥१॥ श्रावणे माधवे वोर्जे माघे नियमपूर्वकम् । लिंगप्रदक्षिणाः कुर्याच्छ्रद्धया विधिपूर्विकाः ॥ २ ॥ शिवापतेः प्रत्यहं

च पूजा कार्या प्रयत्नतः । लक्षं समाप्य पश्चात्तु कुर्यादुद्यापनं व्रती ॥ ३ ॥ विष्णुधर्मोत्तरे ) अषाढशुक्ल पूर्णिमायां प्रारंभः कार्तिक्यां समापनम् । अथवा शुभमासे प्रारंभं समापनं च कुर्यात्॥ सुरालयेऽश्वत्थमूले तुलस्या गोव्रजेथवा । कुर्यात्प्रदक्षिणाः सर्वाः पूजयित्वा यथाविधि ॥ तत्र प्रयोगः । देशकालौ संकीर्त्य मम सर्वविधपापनिवृत्तिपूर्वकधर्मार्थकाममोक्षफलप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शिवस्य विष्णोर्वा अमुकदेवस्य वा लक्षप्रदक्षिणाव्रतं करिष्ये । इति संकल्प्य गणेशं पूजयेत् । ततः पूजासामग्रीं गृहीत्वा देवालये अश्वत्थादिसमीपं वा गत्वा पुरुषसूक्तेन संपूज्य सहस्रनामादि पठन् करचालनादिरहितः एकाग्रचित्तः प्रदक्षिणाः एकरूपतया समाप्तिपर्यंतं कृत्वा अंते उद्यापनं कुर्यात् ॥ अथोद्यापनप्रयोगः । देशकालौ स्मृत्वा मम सर्वविधपातकनिवृत्तिपूर्वकश्रीपरमेश्वरप्रीत्यर्थम् अमुककामनया वा आचरितलक्षप्रदक्षिणाव्रतोद्यापनं करिष्ये । इति संकल्प्य । गणेशपूजनाद्याचार्यवरणांतं कर्म पूर्ववत्कुर्यात् । ततः सर्वतोभद्रे ताम्रकलशोपरि सुवर्णमयं कृतप्रदक्षिणं देवं तत्तन्मंत्रेण संस्थाप्य पुरुषसूक्तेन नाममंत्रेण वा पंचामृतपुरःसरं षोडशोपचारैः संपूज्य साष्टांगं प्रणमेत् । ततोऽग्निं प्रतिष्ठाप्य प्रधानदेवतायै तद्वैदिकमंत्रेण वा नाममंत्रेण अथवा विष्णुगायत्र्या चरु

तिलाज्यद्रव्यैः प्रदक्षिणादशांशेन अथवा अष्टोत्तरसहस्रमष्टोत्तरशतं वा हुत्वा सर्वतोभद्रदेवताभ्यो घृता
हुतिं जुहुयात् । ततो होमांते तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं च कृत्वा आचार्यं संपूज्य सोप
स्करां प्रतिमां कपिलां गां च दत्त्वा यथाशक्ति ब्राह्मणान्भोजयेत् । अत्र यद्देवताकप्रदक्षिणास्तद्देवत
प्रकाशको मंत्रः पूजाहोमादौ ग्राह्यः । एवमेव अश्वत्थतुलसीगोब्राह्मणाग्निहनुमल्लक्षप्रदक्षिणाव्रतोद्यापनं
कुर्यात् ॥ अथ अश्वत्थप्रदक्षिणासु विशेषविधिः ( भविष्ये ) आदावाराधयेद्विष्णु ध्यानावाहनपूर्व
कम् । तथैव पिप्पलतरुं नारायणस्वरूपिणम् ॥ १ ॥ अर्चयेत्पुरुषसूक्तेन उपचारैश्च षोडशैः ।
ततः प्रदक्षिणां कुर्यात्तत्सर्वं सफलं भवेत् ॥ २ ॥ लक्षमेकं द्विलक्षं वा त्रिचतुःपंचलक्षकम् ।
कार्यस्य गौरमाज्ञेयं द्वादशांतं समाचरेत् ॥ ३ ॥ ब्रह्मचारी हविष्याशी ह्यधःशायी जितेंद्रियः ।
मौनी ध्यानपरो भूत्वा पिप्पलस्य स्तुतिं पठेत् ॥ ४ ॥ विष्णोर्नामसहस्रं च पौरुषं वैष्णवं तथा ।
ततो लक्षदशांशेन सघृतं पायसं हुनेत् ॥ ५ ॥ तर्पणं तद्दशांशेन भोजनं तद्दशांशतः । होमादौ
विष्णुगायत्री विष्णोर्नामसहस्रकम् ॥ ६ ॥ ततो होमांते द्रोणपरिमिततंडुलपुंजोपरि पलाधिक
रौप्यपीठे सुवर्णादधिकहैममश्वत्थतरुं स्कंधशाखायुतं संस्थाप्य एवमेव तुलसीप्रदक्षिणासु रौप्य

मयमालवालं सुवर्णमयीं तुलसीं च स्थापयेत् । श्वेतवस्त्रेण संछाद्य षोडशोपचारैः संपूज्य विप्राय दद्यात् । तत्र मंत्रः । पिप्पलो वृक्षराजेंद्रो ह्यग्निगर्भस्त्वमेव च । प्रभुर्वनस्पतीनां च पूर्वजन्मनि यत्कृतम् अघौघं नाशय क्षिप्रं तव रूपप्रदानतः ॥ १ ॥ ततो द्विजप्रार्थना । अमुं तरुं गृहाण त्वं विष्णुरूपं द्विजोत्तम । स्वीकृत्य दुष्कृतं घोरं क्षिप्रं शांतिं प्रयच्छ मे ॥ १ ॥ व्रतपूर्त्तये शुक्लां गामाचार्याय दद्यात् । अन्यत्सर्वं पूर्ववत् । इत्यश्वत्थतुलसीप्रदक्षिणाविधानम् ॥ अथ लक्षदीपदानविधानं तदुद्यापनं च लिख्यते ॥ ( विष्णुधर्मोत्तरे ) पंचायतनदेवानामाराध्यस्यैव वाऽग्रतः । चातुर्मास्ये तु संप्राप्ते शुभे वा मासि भूमिप ॥ १ ॥ प्रत्येकं चैकदीपं च दीपितं गोघृतेन च । तिलतैलेन वा कुर्यात्कर्पूरेण समन्वितम् ॥ २ ॥ दीपं प्रज्वाल्य विधिवद्वर्त्या कार्पाससंभवा । एकसूत्र्या त्रिसूत्र्या वा बिल्वाख्या माणिकान्विता ॥ ३ ॥ ( स्कंदपुराणे ) रुद्रसंख्याञ्छिवस्याग्रे दीपान्प्रत्यहमर्पयेत् । वर्षमेकं तदर्धं वा वर्षद्वयमथापि वा ॥ १ ॥ लक्षसंख्यांस्तदर्धान्वा द्विलक्षान्वा स्वशक्तितः । दीपमालां यथाशक्ति कार्तिके श्रद्धयान्विताः ॥ २ ॥ घृतेन ये प्रकुर्वंति तेषां पुण्यं वदामि ते । यावत्कालं प्रज्वलंति दीपास्तस्य शिवाग्रतः ॥ तावद्युगसहस्राणि स्वर्गलोके

महीयते ॥ ३ ॥ अथ बिल्ववर्तिप्रकारः ॥ कार्पासस्य स्वहस्तेन तंतुं निष्कास्य यत्नतः । स्वकीयैर्वापि विप्राद्यैरंगुलीत्रयसंमिता ॥ १ ॥ त्रिवृता शोभना चैव बिल्ववर्तिरुदाहृता । तां तु संवर्तयेद्वर्तिं स्वप्रदेशिनिसंमिताम् ॥ एवं लक्षमिताः कार्याः शक्तौ कोटिमिता अपि ॥ २ ॥ घृते निमज्य वा तैले स्थापयेत्ताम्रपात्रके । अथवा मृन्मये पात्रे प्रत्यहं संख्ययान्विताः ॥ ३ ॥ श्रावणे माधवे माघे कार्तिके तु विशेषतः । दिनेदिने सहस्रं तु अर्पयेद्बिल्ववर्तिकाः ॥ ४ ॥ त्र्यंबकेश्वरमुद्दिश्य देवागारे विशेषतः । गंगातीरेऽथवा गोष्ठे यद्वा ब्राह्मणसन्निधौ ॥ ५ ॥ प्रज्वालयेत्तु पूजांते ब्रह्मलोकजिगीषया । एवं संपाद्य वैशाख्यां कार्तिक्यां वा विशेतः ॥ ६ ॥ माघ्यां वाप्यथवा यस्यांकस्यांचित्पूर्णिमातिथौ । प्रातः स्नात्वा शुचिर्भूत्वा कुर्यादुद्यापनं बुधः ॥ ७ ॥ अथ रुद्रवर्तिप्रकारः ॥ ( भविष्योत्तरे ) कार्पासतंतुभिः कार्या रुद्रवर्तिः शिवप्रिया । कर्तितव्यं स्वहस्तेन सूत्रं श्वेतं दृढं नवम् ॥ एकादशैस्तंतुभिश्च कारयेद्रुद्रवर्तिकाः ॥ १ ॥ लक्षसंख्यायुताश्चैव गव्याज्येन परिप्लुताः । देयाः शिवालये नित्यं भक्तियुक्तेन चेतसा ॥ २ ॥ अथ विष्णुवर्तिप्रकारः ॥ ( स्कांदे ) शुभे तिथौ शुभे लग्ने चंद्रवारे च शोभने । सम्यग्विशोध्य

कार्पासं तृणधूलिविवार्जितम् ॥ १ ॥ तस्य सूत्रं विधायाशु चतुरंगुलिका कृत्वा । पंचसूत्रयुता वर्तिर्विष्णुवर्तीति कथ्यते ॥ २ ॥ एवं कुर्याल्लक्षसंख्या गोघृतेन परिप्लुताः । उद्दीपयेच्च विष्णवग्रे पात्रे राजमृन्मये ॥ ३ ॥ अथवा प्रत्यहं देयाः सहस्रद्वयसंमिताः । एवं दिनानि पंचाशदंते चोद्यापनं चरेत् ॥ ४ ॥ अथ लक्षदीपव्रतोद्यापनप्रयोगः ॥ पूर्वोक्तप्रकारेण देवाग्रे लक्षदीपदानं कृत्वा कार्तिकपूर्णिमायामुद्यापनं कार्यम् । तद्यथा । पूर्वदिने उपवासं विधाय प्रातर्नद्यादौ स्नात्वा देवर्षिपितॄन्संतर्प्य नित्यकर्म कृत्वा देशकालौ संकीर्त्य मम विविधपापक्षयपूर्वकाभीष्टकामसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् आचरितलक्षदीपदानसांगतासिद्धये तदुद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि सौवर्णीम् उमामहेश्वरप्रतिमां कर्षप्रमाणां त्र्यंबकमंत्रेण प्रतिष्ठाप्य पुरुषसूक्तेन पंचामृतपुरःसरं षोडशोपचारैः संपूज्य रजतपात्रे सुवर्णवर्तिकां कार्पासवर्तिकां च संस्थाप्य गोघृतेनापूर्य कर्पूरेण सह महानीराजनं कृत्वा प्रदक्षिणात्रयं विधाय साष्टांगं प्रणमेत् । ततो रात्रौ पुराणश्रवणादिना जागरणं कृत्वा प्रातः पुनः संपूज्य

स्थंडिलेऽग्निं प्रतिष्ठाप्य आज्यभागांते तिलसार्पर्यवचरुबिल्वपत्रादिभिः ॐ सद्योजातंप्रपद्यामि सद्योजातायवैनमोनमः भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः स्वाहा ॥ १ ॥ ॐ वामदेवायनमो ज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणायनमोबलविकरणायनमोबलायन मोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः स्वाहा ॥ २ ॥ ॐ अघोरेभ्योथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्योनमस्तेऽअस्तुरुद्ररूपेभ्यः स्वाहा ॥ ३ ॥ ॐ तत्पुरुषायविद्महेमहा देवायधीमहि । तन्नोरुद्रः प्रचोदयात् स्वाहा ॥ ४ ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेऽअस्तुसदाशिवोम् स्वाहा ॥ ५ ॥ इति मंत्रैः प्रत्येकमष्टोत्तरशतं हुत्वा सर्वतोभद्रदेवताभ्यश्चैकैकाज्यहुतिं हुत्वा होमशेषं समापयेत् । ततो होमांते पुनर्महेशं सांगं संपूज्य । आचार्याय सोपस्करां प्रतिमां दत्त्वा व्रतपूर्त्तये सवत्सां सहिरण्यां गां च दत्त्वा सुवर्णवर्तिसंयुतं रौप्यदीपं घृतपूरितं कांस्यपात्रसहितं कस्मैचिद्ब्राह्मणाय दद्यात् । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा । तेभ्यो वस्त्रालंकारादि समर्प्य आशिषो गृहीत्वा गुरोराज्ञया बंधुभिः सह भुंजीत । एवमेव रुद्रवर्तीकर्पूरवर्तीबिल्ववर्तीनामुद्यापनं कुर्यात् । एवं यः कुरुते मर्त्यो

लक्षदीपादिदीपनम् । नरो वाप्यथवा नारी सोऽश्नुते पदमव्ययम् ॥ १ ॥ इति स्कांदोक्त शिवादि लक्षदीपकदानोद्यापनम् ॥ अथ विष्णोर्लक्षवर्तिव्रतोद्यापनम् ॥ श्रावणशुक्लप्रतिपदमारभ्य कार्तिकपौर्णमासीपर्यंतं सहस्रवर्तिकोद्दीपनं कृत्वा अंते उद्यापनं कार्यम् । अथवा माघे वैशाखे वा पूर्णिमायां कार्यम् । तत्र प्रयोगः देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकविष्णुलोक प्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् आचरितं यल्लक्षवर्तिव्रतं तत्संपूर्णफलावाप्तये तदुद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः सर्वतोभद्रे ब्रह्मादिदेवान्संपूज्य तन्मध्ये ताम्रकलशोपरि सौवर्णं विष्णुं लक्ष्मीसहितम् ॐ इदं विष्णुर्विचक्रमे० इति मंत्रेण प्रतिष्ठाप्य तद्दक्षिणे सावित्र्या सहितं ब्रह्माणम् ॐ ब्रह्मजज्ञानं० १ इति मंत्रेण । विष्णोरुत्तरे उमासहितं शिवम् ॐ नमः शंभवाय० १ इति मंत्रेण च संस्थाप्य तत्पुरतो राजतं गरुडं प्रतिष्ठाप्य पुरुषसूक्तेन तत्तन्नाम्ना च पंचामृतपुरःसरं षोडशोपचारैः संपूज्य सुवर्णवर्तियुक्तराजतपात्रं घृतेना पूर्य कार्पासबहुवर्तिभिः सह महानीराजनं कृत्वा प्रदक्षिणाचतुष्टयं विधाय साष्टांगं प्रणमेत् । पुष्पपूजांते अंगपूजा कार्या । तद्यथा । ॐ कालाय नमः शिरः पूजयामि १ विष्णवे नमः

ललाटं पू० २ वह्नये० नेत्रे० ३ रवये० कर्णौ० ४ दीप्ताय० नासां० ५ निशाकराय० मुखं० ६ रुद्राय० कंठं० ७ शेषाय स्कंधौ० ८ जगद्व्यापिने० बाहू० ९ तेजोरूपाय० स्तनौ० १० महेश्वराय० वक्षः पू० ११ निरंजनाय० उदरं पू० १२ फलाध्यक्षाय० १३ विश्वरूपिणे० कटी पू० १४ जगत्प्रभवे० गुदं० १५ स्वप्रकाशाय० ऊरू० १६ स्वयंज्योतिषे० जानुनी० १७ चतुर्व्यूहाय० गुल्फौ० १८ जनाधिपाय० पादौ पू० १९ परब्रह्मणे नमः सर्वांगं पूजयामि २० । इत्यंगपूजां पुष्पपत्रैः कृत्वा विशेषोपहारादि समर्प्य रात्रौ जागरणं कुर्यात् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभागांते । ॐ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनाविद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्तेनमऽउक्तिंविधेम १ इति मंत्रेण पायसेन सहस्रमष्टोत्तरशतं वा । ॐ इदम्विष्णुर्विचक्रमे० स्वाहा इति मंत्रेण पलाशसमिधः । विष्णुगायत्र्या घृतं च सहस्रं वाष्टोत्तरशतं हुत्वा ब्रह्मणे शिवाय च तत्तन्मंत्रेणाष्टाविंशतितिलाहुतिभिर्होमं कुर्यात् । ततः सर्वतोभद्रदेवताभ्य एकैकाज्याहुतिं दत्त्वा होमशेषं समाप्य ततो दुग्धमिश्रितजलेन दशसाहस्रं तर्पणमष्टोत्तरशतं मार्जनं च कृत्वा पुनर्देवं सांगं संपूज्य गोघृतालोडितसहस्रवर्तिभिरष्टोत्तरशतवर्तिभिर्वा कर्पूरेण सह महानीराजनं कृत्वा

प्रदक्षिणाचतुष्टयं विधाय प्रणम्य क्षमापयेत् । ततः आचार्यं संपूज्य सोपस्करां प्रतिमां घृतपूरितत्रिंशत्पलपरिमितं कांस्यपात्रं यथाशक्ति वा तथा सुवर्णवर्तिसंयुक्तं रौप्यपात्रं च दद्यात् । तत्र मंत्रः । रौप्यपात्रस्थितं दीपं हेमवर्तिसमन्वितम् ॥ कांस्यपात्रेण सहितं ददामि व्रतपूर्तये ॥ १ ॥ ततः सवत्सां धेनुं सोपस्करां शय्यां च दत्वा यथाशक्ति ब्राह्मणान् भोजयित्वा आशिषो गृहीत्वा बंधुभिः सह स्वयं भुंजीत ॥ एवमेव माणिक्यलक्षवर्तीव्रतोद्यापनं कुर्यात् । इति विष्णुरहस्योक्तं विष्णुलक्षवर्तीव्रतोद्यापनम् ॥ अथ पार्थिवलिंगोद्यापनम् ॥ तत्रादौ लिंगारंभकालादि लिख्यते । ( शैवागमे ) कार्तिके मार्गशीर्षे वा माघवैशाखसंज्ञिते । श्रावणे बहुले पक्षे व्रतस्याचरणं भवेत् ॥१॥ पुण्यारण्ये नदीतीर्थे पर्वताग्रे शिवालये । श्रीवृक्षाश्वत्थतुलसीधात्रीच्छायायुते वने ॥ २ ॥ गोष्ठे गृहे वा देवाग्निसूर्यगोविप्रसन्निधौ । शिवपूजा प्रकर्तव्या पूर्वपूर्वं महाफलम् ॥ ३ ॥ कार्तिकादिशुभे मासे लिंगानां च समापनम् । चतुर्दशी दर्शयुक्ता चाष्टमी नवमीयुता ॥ ४ ॥ समाप्तिस्तत्र कर्तव्या रौद्र युक्ते पुनर्वसौ । अन्येष्वपि च कालेषु शुभेषु च समापनम् ॥ ५ ॥ सहस्रं वाथ लक्षं वा कोटिं वाथ विधानतः । लिंगानां पूजयित्वा तु सर्वान्कामानवाप्नुयात् ॥ ६ ॥ शुद्धप्रदेशसंभूतां मृदमा

हत्य यत्नतः । शुद्धेन वारिणाभ्युक्ष्य सुसंघट्य तु तत्पुनः ॥ ७ ॥ लिंगानां संख्यया कुर्यात्पृ
थक् पिंडान्यथाक्रमम् । पलद्वयान्न कर्तव्यं न्यूनं लिंगं सदैव हि ॥ ८ ॥ अखंडं तु चरं लिंगं
द्विखंडं स्थावरं स्मृतम् । लिंगमादौ विधायाथ पिंडिकां रचयेत्ततः ॥ ९ ॥ पक्वजंबूफलाकारं
लिंगं कुर्यान्मनोहरम् । वर्तुलं चतुरस्रं वा समं पीठद्वयं शुभम् । साक्षतं स्थापयेत्तस्मान्निर्माणक्षण
एव तत् ॥ १० ॥ ( पूजास्थानं स्कांदे ) पाषाणदारुजे देशे दर्भांतरितसंस्थले । पुष्पप्रकरसंकीर्णे
माणौ वा वैदिके भुवि ॥ ११ ॥ सबिल्वताम्रपात्रे वा स्थापयेत्पार्थिवं शिवम् । मृल्लिप्तहस्त एवाशु
संक्षालितकरेऽथवा ॥ १२ ॥ यस्तु पूजयते लिंगं भक्त्या त्रिभुवनेश्वरम् । स स्वर्गराज्यमोक्षाणां क्षिप्रं
भवति भाजनम् ॥ १३ ॥ आदौ कृत्वा गणेशं च लिंगं कुर्यात्ततः परम् । पश्चाच्छक्तिं ततः स्कंदं ततो
लिंगान्यथाविधि ॥ १४ ॥ हरो महेश्वरः शंभुः शूलपाणिः पिनाकधृक् । शिवः पशुपतिश्चैव महादेव
इति क्रमात् ॥ १५ ॥ मृदानयनसंघट्टप्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव क्षमस्वेति विसर्जनम् ॥१६॥
अथ पार्थिवलिंगोद्यापनप्रयोगः ॥ पूर्वोक्तमासे चतुर्दश्यां वा सोमवारे प्रातर्नद्यादौ स्नात्वा देवर्षि
पितॄन्संतर्प्य धौतवाससी परिधाय भस्मत्रिपुंड्रं रुद्राक्षधारणं च कृत्वा संध्यादिनित्यकर्म समाप्य

नित्यपूजावत् पार्थिवं संपूज्य सर्वसंभारान् संपाद्य सपत्नीको मंडपं प्रविश्य स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपापनाशपूर्वकधर्मार्थकाममोक्ष सिद्धिद्वारा श्रीभवानीशंकरप्रीतये अमुककामनया वा कृतानां पार्थिवलिंगानां संपूर्णफलावाप्तये तदुद्यापनं करिष्ये । इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कर्म कृत्वा एकादश द्वादश वा ऋत्विजो वृणुयात् । ततो द्वादशलिंगतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि रक्तपट्ट वस्त्रं प्रसार्य्य तत्र बिल्वपत्रोपरि लिंगाकारां सौवर्णी महेश्वरप्रतिमां वस्त्रद्वयवेष्टितां त्र्यंबकमंत्रेण प्रतिष्ठाप्य शिवस्य वामे ॐ गौरीर्मिमाय० १ इति मंत्रेण अथवा ॐ नमो भगवत्यै उमादेव्यै शिव प्रियायै नमः इति मंत्रेण च सौवर्णीं गौरीम् । तद्दक्षिणे ॐ तत्पुरुषायविद्महेवक्रतुंडायधीमहि । तन्नो दंतिः प्रचोदयात् ॥ मंत्रेण सौवर्णं गणेशं च । तद्दक्षिणे ॐ तत्पुरुषायविद्महेमहासेनायधीमहि । तन्नः षण्मुखः प्रचोदयात् । इति मंत्रेण सौवर्णं स्कंदम् । पुरतो राजतं वृषभं च संस्थाप्य परितः इंद्रादि लोकपालान्संस्थापयेत् ॥ अथ पूजनम् । तत्रादौ स्वशरीरे न्यासं कुर्यात् । ॐ शिवाय नमः ललाटे १ ॐ रुद्राय नमः कंठे २ ॐ ईशानाय० नाभौ ३ ॐ शंकराय० जान्वोः ४ ॐ सदा

शिवाय नमः पादयोः ५ इति न्यासं कृत्वा ध्यायेत् । ( ध्यानम् ) मंगलायतनं देवं भवं कांतं मनोरमम् । ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया ॥ १ ॥ इति ध्यात्वा ॐ नमो भगवते रुद्राय इति पुष्पाक्षतान् लिंगोपरि क्षिप्त्वा पुरुषसूक्तेन पंचामृतपुरःसरं षोडशोपचारैः संपूज्य रुद्राध्यायेनाऽभिषेकं कृत्वा कर्पूरेण नीराजयित्वा त्रिः परिक्रम्य प्रार्थयेत् । नम ॐ काररूपाय नमोक्षरवपुर्धृते । नमो नादात्मने तुभ्यं नमो बिंदुकलात्मने ॥ १ ॥ अलिंगलिंगरूपाय रूपातीताय ते नमः । त्वं माता सर्वलोकानां त्वमेव जगतः पिता ॥ २ ॥ त्वं भ्राता त्वं सुहृन्मित्रं त्वं पिता त्व पितामहः । नमस्ते भगवन् रुद्र भास्करामिततेजसे ॥ ३ ॥ नमो भवाय देवाय उमया सहिताय च । सर्वाय क्षितिरूपाय सदा सुरभिणे नमः ॥ ४ ॥ पशूनां पतये चैव कामिनेऽमिततेजसे । भीमाय व्योमरूपाय शब्दरूपाय ते नमः ॥ ५ ॥ महादेवाय सोमाय अमृताय नमोनमः । उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ ६ ॥ इति प्रार्थ्य क्षमापयेत् । ॐ अंगहीनं क्रियाहीनं विधिहीनं महेश्वर । पूजितोसि मया देव तत्क्षमस्व जगत्पते ॥ १ ॥ इति क्षमाप्य पुराणपठनादिना रात्रौ जागरणं कुर्यात् । तद्दिने उपोषणम् । ततः प्रातरग्निं

प्रतिष्ठाप्य आज्यभागांते कृतलिंगदशांशेन पायसमधुशर्कराज्यतिलाक्षतबिल्वपत्रादिद्रव्यैः केवलपायसेन वा त्र्यंबकमंत्रेण अथवा नमः शिवाय इति पंचाक्षरेण होमं कृत्वा । गौरीगणेश षण्मुखेभ्यः पूर्वोक्तद्रव्यैः प्रत्येकं दशदशाहुतीः वृषभलोकपालेभ्यो दशदशतिलाहुतीर्मंडल देवताभ्यश्चैकैकाज्याहुतिं च जुहुयात् । ततो होमशेषं समाप्य होमदशांशेन तर्पण तद्दशांशेन मार्जनं च कृत्वा विशेषसत्कारेण पीठस्थं देवं सांगं संपूज्य आचार्यपूजनं कृत्वा व्रतपूर्त्तये सवत्सां धेनुं दद्यात् । ततोऽन्यानपि शिवरूपान् विप्रान् वस्त्रदक्षिणादिभिः संपूज्य सोपस्करं पीठमा चार्याय दद्यात् । तत्र मंत्रः । पीठं गृहाण भूदेव शिवशक्त्यादिसंयुतम् । वाञ्छितार्थं प्रयच्छायुर्देहि मे व्रतजं फलम् ॥ १ ॥ शिवशक्त्यात्मकं यस्माज्जगदेतच्चराचरम् । तस्मादेतेन मे सर्वं करोतु भगवाञ्छिवः ॥ २ ॥ कैलासवासी गिरिशो भगवान्भक्तवत्सलः । चराचरात्मको लिंगरूपी दिशतु वांछितम् ॥ ३ ॥ इति प्रार्थ्य मार्जनदशांशेन यथाशक्ति वा सदन्नेन ब्राह्मणान् संतर्प्य पूर्णतां वाचयित्वा इष्टजनैः सह भुंजीत ॥ सोद्यापनं व्रतमिदं यः कुर्यात्प्रयतः स तु । शिवलोकं समासाद्य तत्रैव वसते चिरम् ॥ १ ॥ इति भविष्योत्तरपुराणशैवागमादिप्रोक्तं पार्थिव

लिंगव्रतोद्यापनम् ॥ अथ पार्थिवगणेशोद्यापनम् ॥ ( रुद्रयामले ) यथा पार्थिवलिंगं तु सर्वसिद्धि प्रदायकम् । तथा विघ्नेश्वरं देवं पार्थिवं सर्वकामदम् ॥ १ ॥ ( पाद्मे ) सहस्रं दशसाहस्रं लक्षं कोटिं तथैव च । यः करोति गणेशानां पार्थिवानां नरोत्तमः ॥ सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ १ ॥ अथ प्रयोगः । माघादिशुभमासे शुक्लपक्षे चतुर्थ्यादिशुभतिथौ प्रातर्नद्यादौ स्नात्वा नित्यकर्म कृत्वा । देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकधर्मार्थकाममोक्षसिद्धि द्वारा श्रीगणेशदेवताप्रसन्नार्थं वाऽमुककामनया कृतानां पार्थिवगणेशानां संपूर्णफलावाप्तये तदुद्यापनं करिष्ये । इति संकल्प्य आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् । ततः आचार्यः चतुर्द्वारोपशोभितमंडपांतर्वेदिकायां सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकल शोपरि सुवर्णमयीं गणेशप्रतिमाम् ॐ गणानां त्वा० १ इति मंत्रेण प्रतिष्ठाप्य पुरतो राजतं मूषकं च स्थापयेत् । ततः पुरुषसूक्तेन षोडशोपचारैः पंचामृतरक्तचंदनरक्तपुष्पाक्षतलड्डुकनैवेद्या दिभिश्च संपूज्य गणेशाथर्वशिरसा प्रार्थ्य विशेषार्घ्यं दत्त्वा क्षमापयेत् । पुष्पपूजांते आवरण पूजा अंगपूजा च कर्त्तव्या । तद्यथा । पूर्वादिक्रमेण ॐ वक्रतुंडाय नमः १ एकदंष्ट्राय० २ गजान

नाय० ३ महादेवाय० ४ विकटाय० ५ विघ्नराजाय० ६ धूम्रवर्णाय० ७ हेरंबाय नमः ८। इति पूजयेत् । तद्बाह्ये पूर्वादिषु ॐ ब्राह्म्यै नमः १ माहेश्वर्यै० २ कौमार्यै० ३ वैष्णव्यै० ४ वाराह्यै०५ इंद्राण्यै० ६ चामुंडायै० ७ वैनायक्यै नमः ८। तद्बहिः पूर्वादिदिक्षु इंद्रादिदिक्पालान्संपूज्य। अंगपूजां कुर्यात् । तद्यथा। ॐ गणनाथाय नमः पादौ पूजयामि १ गणेशा० जानुनी पू० २ गणंजयाय० ऊरू पू० ३ गणक्रीडाय० कटी पू० ४ वक्रतुंडा० पू० ५ लंबोदराय० कंठं पू० ६ गजाननाय० स्कंधौ० ७ हेरंबाय० हस्तौ० ८ विकटाय० आस्यं० ९ विघ्नराजाय० नेत्रे० १० धूम्रवर्णाय० शिरः पूजयामि ११ सर्वसिद्धिप्रदायकाय नमः सर्वांगं पूजयामि १२। एवं संपूज्य स्तोत्रैः स्तुत्वा पुराणपठनादिना रात्रिं निनयेत् । ततः प्रातरग्निं प्रतिष्ठाप्य आज्यभांते प्रधानदेवगणेशाय ॐ गणानां त्वा० १ इति मंत्रेण अथवा गं गणपतये स्वाहा इति नाममंत्रेण च कृतपार्थिवगणेशदशांशेन पायसतिलाज्यमोदकरक्ताक्षतपंचखाद्यशमीदूर्वाद्रव्याष्टकेन वा तिलपायसाज्यैर्होमं कृत्वा आवरणदेवतामंडलदेवताभ्यश्च दशदश तिलाहुतीर्दद्यात् । ततो होमं समाप्य देवं पुनः संपूज्य होमदशांशेन तर्पणं तद्दशांशेन मार्जनं च कृत्वा आचार्यं संपूज्य सोपस्करं पीठं

सवत्सां गां च दत्त्वा मार्जनदशांशेन वा एकविंशतिं ब्राह्मणान् मोदकादिभिर्भोजयित्वा तेभ्यः पक्वान्नपूरितवस्त्रयुग्मसहितान् सदक्षिणाकान् कलशान् एकविंशतिगणेशनामभिर्दत्त्वा पूर्णतां वाचयित्वा आशिषो गृहीत्वा इष्टजनैः सह भुंजीत । इति रुद्रयामलोक्तं पार्थिवगणेशव्रतोद्यापनं समाप्तम् ॥

अथ तुलसीविवाहविधिः ॥ ( विष्णुयामले ) आदावेवाथ तुलसीं वने वा स्वगृहेऽपि वा । मासमात्रेण संवर्ध्य ततो यजनमारभेत् ॥ १ ॥ सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा । अथवा कार्तिके मासि भीष्मपंचदिनेऽथवा ॥ २ ॥ वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः । मंडपं कारयेत्तत्र कुंडवेदी विवाहवत् ॥ ३ ॥ ब्राह्मणं देशिकं चैव चतुरश्च तथर्त्विजः । ग्रहयज्ञं पुरस्कृत्य मातृणां यजनं तथा ॥ ४ ॥ कृत्वा नांदीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् । कृत्वा तु रौप्यतुलसीं लग्ने ह्यस्तमिते रवौ ॥ ५ ॥ ( गोधूलिकलग्ने इत्यर्थः ) संपूज्यालंकृतां तां च प्रदद्याद्विधितो हरेः । ( हरये इत्यर्थः ) समश्रुतेन मंत्रेण वस्त्रयुग्मेन वेष्टयेत् ॥ ६ ॥ यदाबध्नेति मंत्रेण कंकणं पाणिपल्लवे । कोदादिति च मंत्रेण करग्रहो विधीयते ॥ ७ ॥ कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकम् । आचार्यो वेदिकाकुंडे जुहुयाच्च नवाहुतीः ॥ ८ ॥ यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः । प्रदक्षिणाः प्रकुर्वीत

प्र०
॥१४७॥

चवस्रो विष्णुना सह ॥ ९ ॥ ( विष्णुसहिततुलस्या इत्यर्थः ) पठेयुः शांतिकाध्यायांस्तथा वैष्णव संस्तवान् । गायंतु मंगलं नार्यो भेरीतूर्यादिनिस्वनैः ॥ १० ॥ गां पीठं च तथा शय्यामाचार्याय निवेदयेत् । ऋत्विग्भ्यो दक्षिणां दद्यात्तदन्नैर्भोजयेद्द्विजान् ॥ ११ ॥ एवं प्रतिष्ठितां देवीं विष्णवे यः समर्पयेत् । आजन्मोपार्जितात्पापान्मुच्यते नात्र संशयः ॥ १२ ॥ अथ तुलसीविवाहप्रयोगः ॥ उत्तरायणे वा गुरुशुक्रोदये अथवा कार्तिके भीष्मपंचकदिनेषु तत्रापि नवम्यामेकादश्यां वा पूर्णि मायां वैवाहिकनक्षत्रे च कुंडवेद्यादिसहितं विवाहवत् मण्डपं कृत्वा प्रातर्नद्यादौ स्नात्वा देवर्षिपितॄ न्संतर्प्य नित्यकर्म समाप्य देशकालौ संकीर्त्य मम अखिलविविधपातकशमनपूर्वकाभीष्टसिद्धि द्वारा श्रीमहाविष्णुप्रीत्यर्थं तुलसीविवाहं करिष्ये । इति संकल्प्य गणेशपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनपुरः सरं नांदीश्राद्धं सूर्यादिग्रहपूजनं कुलदेवतापूजनं च यथाचारं कृत्वा आचार्या दिवरणं च पूर्ववत्कुर्यात् ॥ ( अथवा विवाहदिने तत्पूर्वदिने वा प्रातर्नांदीश्राद्धं कुर्यात् ) ततः तुलस्या आलवालं परितः कृतमण्डपे विवाहवत् तुलसीपुरतः षड्वप्रां श्रीधरीं वेदीं कृत्वा तुलस्या हरिद्रारोपणादि कृत्वा वेद्यां सर्वतोभद्रं विलिख्य तत्र ब्रह्मादिदेवताः संपूज्य तन्मध्यकमले ताम्रक

लशं यथाविधि संस्थाप्य तदुपरि पट्टवस्त्रं प्रसार्य तत्र सिंहासनोपरि सुवर्णमयीं विष्णुप्रतिमां
तद्वामे रौप्यमयीं तुलसीप्रतिमां च अग्न्युत्तारणपूर्वकं प्रतिष्ठापयेत् । तत्र मंत्रौ । आगच्छ भगवन्
देव अर्चयिष्यामि केशव । तुभ्यं दास्यामि तुलसीं सर्वकामप्रदो भव ॥ १ ॥ ॐ इदंविष्णुर्विचक्रमे
त्रेधानिदधेपदम् । समूढमस्यपा७ंसुरेस्वाहा ॐ भूर्भुवः स्वर्महाविष्णो इहागच्छ इह तिष्ठ ॥ १ ॥
ॐ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणसदाप्रिये ॥ ॐ भूर्भुवः
स्वः तुलसि इहागच्छ इह तिष्ठ ॥ इत्यावाह्य तुलसीसहितं श्रीमहाविष्णुं पुरुषसूक्तेन षोडशोपचारैः
संपूज्य ॐ अद्भ्यःसंभृतःपृथिव्यै० इत्यादिषण्मंत्रैः प्रार्थ्य विष्णोर्मधुपर्कपूजां कुर्यात् । तद्यथा । यज
मानः पाद्यपात्रमादाय ॐ पाद्यं पाद्यं पाद्यम् इति त्रिः पठित्वा ॐ एतावानस्यमहिमा० १ ॐ
महाविष्णवे नमः पाद्यम् । इति मंत्रेण विष्णोः पादौ प्रक्षालयेत् । ततो दूर्वाक्षतफलपुष्पचंदनादि
युतमर्घपात्रं गृहीत्वा ॐ अर्घोऽर्घोऽर्घः । इत्युक्त्वा ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः० १ ॐ महाविष्णवे
नमः अर्घ्यम् इति मंत्रेणार्घ्यं निवेदयेत् । ततः आचमनीयपात्रं गृहीत्वा । ॐ आचमनीय
माचमनीयमाचमनीयमिति पठित्वा ॐ ततोविराडजायत० महाविष्णवे नमः आचमनीयम् ।

व्र० ॥१४८॥

इति मंत्रेणाचमनं दद्यात् । ततः कांस्यपात्रस्थवस्त्रगालितदधिमधुघृतानि द्वितीयकांस्यपात्रपि हितानि आदाय । ॐ मधुपर्को मधुपर्को मधुपर्कः इत्युक्त्वा । ॐ मधुवाताऽऋतायते० १ । विष्णो दधिमधुघृतं कांस्यपात्रपुटीकृतम् । मधुपर्कं गृहाण त्वं वासुदेव नमोऽस्तु ते ॥ १ ॥ श्रीमहाविष्णवे नमः मधुपर्कम् इति मधुपर्कं च दत्त्वा पुनः पूर्ववत् आचमनं दद्यात् । एवं मधुपर्कपूजां कृत्वा तुलसीपूजां कुर्यात् । तत्र तावत् वस्त्रभूषणादिना तुलसीं भूषयित्वा गोधूलीयलग्ने तुलसीसंमुखां श्रीकृष्णप्रतिमां कृत्वा मंगलवाद्यैः सुगंधितैलहरिद्राभ्यां नागवल्लीदलगृहीतास्यामुष्णोदकेनाभिषिच्य वस्त्रयज्ञोपवीतचंदनादि दत्त्वा तुलस्यै हरिद्राकुंकुमाक्तकंठसूत्राद्यलंकारांश्च दत्त्वा घंटादिवाद्यघोषेण । ॐ यदाबध्नं दाक्षायणा हिरण्यᳬशतानीकायसुमनस्यमानाः । तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ १ ॥ इति मंत्रेणोभयोः कंकणं बद्ध्वा तुलसीं ध्यायेत् । ध्यायामि तुलसीं देवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मकह्लारवराभयचतुर्भुजाम् ॥ १ ॥ किरीटहारकेयूरकुंडलादिविभूषिताम् । धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ॥ २ ॥ इति ध्यानम् । भगवत्यै तुलस्यै नमः आवाहनम् १ विष्णुवल्लभायै नमः आसनम् २ सर्वदेवमयायै० पाद्यम् ३

सर्वतीर्थमयायै० अर्घ्यम् ४ दैत्यांतकप्रियायै० आचमनीयम् ५ सर्वलोकहितायै० स्नानम् ६ लक्ष्मीसहोदरायै० वस्त्रयुगम् ७ महादेव्यै० गंधम् ८ रमावासायै० पुष्पाणि ९ अभीष्टदायै० धूपम् १० पापहारिण्यै० दीपम् ११ भगवत्यै० नैवेद्यम् आचमनीयं च १२ अमृतसंभूतायै० मुखवासतांबूलम् १३ अमृतरूपिण्यै० दक्षिणाम् १४ जगद्धात्र्यै० नीराजनम् १५ सुदक्षिणायै० प्रदक्षिणाम् १६ परमेश्वर्यै० पुष्पांजलिम् १७ अभीष्टदात्र्यै नमः नमस्कारम् १८ एवं संपूज्य प्रार्थनां कुर्यात् । सौभाग्यं संततिं देवि धनं धान्यं च मे सदा । आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ १ ॥ अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये । देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः ॥ २ ॥ अतो मां सर्वदा भक्त्या कृपादृष्ट्या विलोकय । एतदायुश्च भाग्यं च सदा देहि हरिप्रिये ॥ ३ ॥ पूतनाभयसंत्रासाद्रक्षितश्च यथा हरिः । तथा संसारसंत्रासाद्रक्ष मे वंशमुत्तमम् ॥ ४ ॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनः प्रिये ॥ ५ ॥ एवं तुलसीं संपूज्य तुलसीसंमुखां श्रीकृष्णप्रतिमां कृत्वा मध्येन्तः पटं प्रसार्य मंगलाष्टकपद्यानि पठेत् । ( तुलसीमंगलम् ) श्रीमत्कार्तिकशुक्लगा तिथिवरा चैकादशी द्वादशी तस्यां गोरजलग्नके

वधुवरौ साक्षाज्जगन्नायकौ । श्रीकृष्णस्तुलसीविवाहमकरोत्तस्मिन्विवाहोत्सवे तौ देवौ भवतां सदा शुभकरौ लक्ष्मीकरौ मंगलम् ॥ १ ॥ ततोंतः पटं विसृज्य अक्षतान् विकीर्य दामोदरहस्ते तुलसीदानं कुर्यात् । तद्यथा उदङ्मुख उपविश्य आचम्य प्राणानायम्य शंखस्थदूर्वाक्षतफलपुष्पचंदनजला न्यादाय देशकालौ संकीर्त्य ममेह जन्मनि जन्मांरे वा कृतकायिकवाचिकमानसिकसांसर्गिकदोषपरि हारार्थं तथा च विष्णुप्रसन्नतार्थम् अमुकगोत्रस्यामुकप्रवरस्य अमुकशर्मणः प्रपौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पुत्रीम् इत्यनेन क्रमेण त्रिरावर्त्य काश्यपगोत्राय दामोदराय महाविष्णवे वराय कन्यावत्संवर्द्धितामिमां तुलसीं श्रीरू पिणीम् यथाशक्त्यलंकृतां तुभ्यं श्रीधरायाहं संप्रददे इति संकल्प्य देवपुरतः साक्षतजलं क्षिपेत् । श्रीमहाविष्णुः प्रीयतामित्युक्त्वा इमां देवीं प्रतिगृह्णातु भवानिति वदेत् । ततो देवहस्तं तुलस्याः स्पर्शं कृत्वा पठेत् । अनादिमध्यनिधन त्रैलोक्यपरिरक्षक ॥ इमां गृहाण तुलसीं विवाहविधिने श्वर ॥ १ ॥ पार्वतीबीजसंभूतां वृंदाभस्मनि संस्थिताम् । अनादिमध्यनिधनां वल्लभां ते ददाम्य हम् ॥ २ ॥ पयोघटैश्च सेवाभिः कन्यावद्वर्धिता मया । त्वत्प्रियां तुलसीं तुभ्यं दास्यामि त्वं

गृहाण भोः ॥ ३ ॥ ( तुलसीप्रार्थना ) त्वं देवी मेग्रतो भूयास्तुलसीदेवि पार्श्वयोः ॥ देवि त्वं पृष्ठतो
भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ १ ॥ इति संप्रार्थ्य पुनस्तौ पूज्य कोदात् कस्मा इति पठेत् । ततः
कृतैतत्तुलसीदानप्रतिष्ठासिद्ध्यर्थमिमां सुवर्णदक्षिणां तुभ्यं दामोदराय संप्रददेवपुरतो हिरण्य
दक्षिणामर्पयेत् ॥ ततः ॐ कोदात्कस्माऽअदात्कामोदात्कामायादात ॥ कामोदाताकामः प्रति
ग्रहीताकामैतत्ते ॥ १ ॥ इति मंत्रेण कृत्वा आचार्यो वेदिकायाम् अग्निं प्रतिष्ठाप्य कुश
कंडिकां कृत्वा आज्यभागांते ॐ नमो भगवते वासुदेवाय स्वाहा इति मंत्रेण । अथवा ॐ नमो
नारायणाय स्वाहा इत्यष्टाक्षरेण पायसाज्यक्षौद्रतिलैरष्टोत्तरशतं जुहुयात् । ततः सर्वतोभद्रदेवताभ्य
एकैकाज्याहुतिं हुत्वा शेषेण स्विष्टकृदादिपूर्णाहुत्यंतं होमशेषं समापयेत् । ततः यजमानः
सपत्नीकः सहामात्यैः सगोत्रजैश्च चतस्रः प्रदक्षिणाः कृत्वा शांतिकाध्यायां । विष्णुस्तोत्राणि च
पठित्वा भेरीतूर्यादिनि स्वनैः सह स्त्रियो मंगलगायनं कुर्युः । ततः आचार्यं वस्त्रभूषणादिभिः
संपूज्य सोपस्करां प्रतिमां कर्मपूर्त्तये सवासां गां सोपस्करां शय्यां च दत्त्वा ऋत्विग्भ्यो दक्षिणां
च दत्त्वा सदन्नेन यथाशक्ति ब्रह्मणान् भोजयेत् । ततस्तेभ्यो दक्षिणां दत्त्वा ऋत्विग्भ्यो दक्षिणां

बंधुभिः सह स्वयं भोजनं कुर्यात् । ( सनत्कुमारसंहितायाम् ) स्वशास्त्रोक्तविधानेन तुलस्याः करपीडनम् । कन्यादानफलं तस्य जायते नात्र संशयः ॥ १ ॥ ( अस्तीति शेष ) सौभाग्यार्थं धनार्थं च विद्यार्थं तु निवृत्तये । संतत्यर्थं प्रकर्त्तव्यं तुलस्याः पाणिपीडनम् ॥ २ ॥ एवमेव धात्र्यश्व त्थयोर्विवाहं कुर्यात् । तदुक्तं च तत्रैव—धात्र्यश्वत्थौ य एकत्र पालयित्वा समुद्वहेत् । न नश्यते तस्य पुण्यं कल्पकोटिशतैरपि ॥ ३ ॥ इति तुलसीविवाहप्रयोगः समाप्तः ॥ अथ धात्री ( आमलकी ) व्रतं तदुद्यापनं च लिख्यते ( विष्णुधर्मोत्तरे ) आश्विनपौर्णमासीमारभ्य कार्तिकपौर्णमासीप र्यंतं कर्तव्यम् । अशक्तस्तु अंतिमदिनत्रयं पूर्णिमायां वा कुर्यात् ॥ तत्र विधिः । प्रातर्नद्यादौ स्नात्वा नित्यकर्म संपाद्य धात्र्या आलवालं कृत्वा तन्मूले पंचरंगोपेतां वेदीं विधाय । तत्समीपे स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य संकल्पं कुर्यात् । देशकालौ संकीर्त्य । मम अखिलपापक्षयपूर्वकधमर्थिकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थ धात्रीमूले विष्णपूजां धात्रीपूजां च करिष्ये । इति संकल्प्य गणेशं पूजयेत् । ततो वेदिमध्ये श्रीविष्णुं संस्थाप्य । शांताकारं भुजगशयनं० १ इत्यादि ध्यात्वा ॐ सहस्रशीर्षा० इति पुरुषसूक्तेन षोडशोपचारैः

संपूज्य पुष्पाक्षतैरंगपूजां कुर्यात् । तद्यथा । दामोदराय नमः पादौ पूजयामि १
केशवाय० कटी० २ नारायणाय० उदरं० ३ वामनाय० कण्ठं० ४ श्रीधराय० बाहू० ५ गोविंदाय०
मुखं० ६ सहस्राक्षाय० नेत्रे० ७ सर्वेश्वराय० ललाटं० ८ विष्णवे० शिरः० ९ त्रिविक्रमाय० नमः
सर्वांगं० १० नमस्कारानंतरं विशेषार्घ्यं पुष्पश्रीफलसंयुक्तं दद्यात् । तत्र मंत्रः । नमः सहस्रशीर्षाय
सहस्राक्षाय ते नमः । नमस्ते सहस्रपदे पुरुषाय नमोस्तु ते ॥ १ ॥ सहस्रनाम्ने देवेश प्रसीद त्वं
ममाच्युत । अर्घ्यं गृहाण भगवन्सर्वकामप्रदो भव ॥ २ ॥ ततः प्रार्थयेत् । भगवन्देवदेवेश लोकनाथ
जगत्पते । अक्षया संततिर्मेऽस्तु दामोदर नमोस्तु ते ॥ १ ॥ ततो धात्र्यै नम इति नाम
मंत्रेण षोडशोपचारैः धात्रीं संपूज्य अथवा षोडशनामभिः षोडशोपचारान् कल्पयेत् । शांत्यै
नमः १ कान्त्यै० २ मेधायै० ३ प्रकृत्यै० ४ विष्णुपत्न्यै० ५ महालक्ष्म्यै० ६ रमायै० ७
कमलायै० ८ इंदिरायै० ९ कल्याण्यै० १० कमनीयायै० ११ सावित्र्यै० १२ जगद्धात्र्यै० १३
गायत्र्यै० १४ धृत्यै० १५ अव्यक्तायै० १६ ( गंधोत्तरमंगपूजा ) विश्वरूपायै नमः पादौ पू० १
सुरूपायै० कटी पू० २ अब्धिसंभवायै० हृदयं० ३ लोकमात्रे० मुखं० ४ धात्र्यै० शिरः पू० ५ एवं
संपूज्य ततोऽष्टदिक्षु दीपान्बलिं धात्र्यै नमः इति दत्त्वा तथैवाष्टकृत्वः सूत्रेण वेष्टयित्वाष्टकृत्वः

व्र०
॥१५१॥

प्रदक्षिणाः नमस्कारांश्च कृत्वा प्रार्थयेत् । धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि । वर्चस्वं कुरु मां देवि धनवंतं तथा कुरु ॥ १ ॥ पुत्रान्पौत्रान्बलं प्रज्ञां देहि मे जगदीश्वरि । संवत्सरं कृतं पापं दूरीकुरु ममाक्षये ॥ २ ॥ ततो धात्रीमूले सव्येनैव तर्पयेत् । पिता पितामहाश्चान्ये अपुत्रा ये च गोत्रिणः । वृक्षयोनिगता ये च ये च कीटत्वमागताः ॥ १ ॥ तिर्यग्योनिगता ये च ये च ब्रह्मांडम ध्यगाः । पिशाचत्वं गता ये च ये च प्रेतत्वमागताः ॥ २ ॥ ते पिबंतु मया दत्तं धात्रीमूलेऽक्षयं पयः । ते सर्वे तृप्तिमायांतु धात्रीमूले निषेचनात् ॥ ३ ॥ एवं प्रत्यहं मासपर्यंतं कृत्वांते उद्यापनवि धिना मंडले सौवर्णीं धात्रीं मूले हैमं विष्णुं पूर्ववत्संपूज्य घृताक्ततिलैरष्टोत्तरशतं पृथक्पृथक् तत्त न्मंत्राभ्यां हुत्वाऽऽचार्याय पीठं व्रतपूर्तये गां च दत्त्वा सर्वसंपूर्णतासिद्धये सुवर्णयुक्तघृतपूरितकांस्य पात्रं दद्यात् । तत्र मंत्रः । कांस्यं ब्रह्ममयं प्रोक्तमाज्यं भोज्यं दिवौकसाम् । सुवर्णमग्निदैवत्यमतः शान्तिं प्रयच्छ मे ॥ १ ॥ ततो द्विजान् संभोज्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ इति विष्णुधर्मोक्तं धात्रीव्रतोद्यापनम् ॥ अथ धात्र्यश्वत्थयोर्विवाहविधानम् ( अस्मद्देशीयास्तु धात्र्यभावात् शम्यां सह विवाहं कुर्वंति ) तत्र प्रयोगः । पूर्वोक्ततुलसीविवाहमासादिषु प्रातर्नद्यादौ स्नात्वा कृतनित्यक्रियो

गोधूलीयलग्ने देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम श्वत्थविवाहं करिष्ये । इति संकल्प्य गणेशपूजनादि आचार्यवरणांतं पूर्ववत्कर्म कुर्यात् ॥ ततः सर्वतोभद्रे ब्रह्मादिदेवताः संपूज्य तन्मध्ये ताम्रकलशोपरि सुवर्णमयीं विष्णुप्रतिमां संस्थाप्य पुरुषसू क्तेन षोडशोपचारैः संपूज्य अग्निं प्रतिष्ठापयेत् । ततो धात्र्यश्वत्थयोरन्वारब्धं कृत्वा मंगलवाद्यैः सुगंधितैलहरिद्राभ्यामुष्णोदकेनाभिषिच्य वस्त्रादिनावेष्ट्य यज्ञोपवीतचंदनादि दत्त्वा धात्र्यै हरिं द्राकुंकुमाक्तसूत्रं वस्त्रकंचुक्यलंकारांश्च दत्त्वा घंटादिवाद्यघोषेण अश्वत्थपूजां कुर्यात् । तद्यथा । आचम्य प्राणानायम्य देशकालौ स्मृत्वा । मम समस्तपापक्षयपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थम् अश्वत्थपूजां करिष्ये । संकल्प्य । अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने । अंततः शिवरूपाय वृक्षराजाय ते नमः ॥ ॐ अश्वत्थाय नमः आवाहनम् ॥ १ ॥ इत्यावाहयेत् । मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥ ॐ अश्व त्थाय नमः आसनम् ॥ २ ॥ अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः । हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु ते ॥ ॐ अश्वत्थाय नमः पाद्यम् ॥ ३ ॥ ( एवं सर्वत्र ) आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च ॥ ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते । इत्यर्घ्यम् ॥ ४ ॥ त्वं क्षीरफलकश्चैव

व्र० ॥१५२॥

शीतलश्च वनस्पते । त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ इत्याचमनीयम् ॥ ५ ॥ चलद
लाय वृक्षाय सर्वदाश्रितविष्णवे । बोधितत्त्वाय देवाय ह्यश्वत्थाय नमोनमः । इति स्नानम् ॥ ६ ॥
एकादशात्मरुद्रोसि वसूनां च शिरोमणिः । नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥
इति वस्त्रम् ॥ ७ ॥ क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते । सत्येन तेन वृक्षेन्द्र मामपि
श्रीर्निषेवताम् ॥ इति यज्ञोपवीतम् ॥ ८ ॥ श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरम् । विलेपनं
सुरश्रेष्ठ गृहाण देव पिप्पल ॥ इति गंधम् ॥ ९ ॥ यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते । यदा
श्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम् ॥ इति पुष्पाणि ॥ १० ॥ वनस्पतिरसोद्भूतः सर्वौषधिविजृंभितः ।
आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥ इति धूपम् ॥ ११ ॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं
मया । दीपं गृहाण देवेश मम ज्ञानप्रदो भव ॥ इति दीपम् ॥ १२ ॥ नैवेद्यं गृह्यतां देव मे भक्ति
ह्यचलां कुरु । ईप्सितं च वरं देहि परत्रेह परां गतिम् ॥ इति नैवेद्यम् ॥ १३ ॥ आचमनीयं च ॥
आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम् ॥ देहि देव महावृक्ष त्वामहं शरणं गतः ॥ इति पुगीफ
लम् ॥ १४ ॥ ऋग्यजुः साममंत्रात्मा सर्वरूपी परात्परः । अश्वत्थो वेदमूलोसावृषिभिः प्रोच्यते सदा ॥

इति दक्षिणा ॥ १५ ॥ ततो नीराजनम् । अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले ॥
अतः श्रुतस्त्वं सततं तरूणां धन्योसि चारिष्टविनाशकोसि ॥ इति पुष्पांजलिम् ॥ १६ ॥ यानिकानि
च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यंति प्रदक्षिणपदेपदे ॥ इति प्रदक्षिणाः ॥ १७ ॥
एवं षोडशोपचारैः संपूज्य तुळसीविवाहवन्मधुपर्कादि दत्वा अंतः पटं धृत्वा मंगलाष्टकादिप
द्यानि पठेत् । ततोऽश्वत्थाय धात्रीं दद्यात् । तद्यथा । देशकालौ संकीर्त्य ममेहजन्मनि जन्मांतरे वा
कृतसमस्तपापक्षयार्थं परमेश्वरप्रीत्यर्थम् अमुकशर्मणः प्रपौत्रीम् अमुकशर्मणः पौत्रीम् अमुकशर्मणः
पुत्रीम् इत्यनेन क्रमेण त्रिरावर्त्य श्रीमदश्वत्थरूपिणे महाविष्णवे इमां धात्रीं कन्यावत्संवर्द्धितां श्रीरू
पिणीं यथाशक्त्यलंकृतां तुभ्यमश्वत्थायाहं संप्रददे । इति संकल्प्य श्रीविष्णुः प्रीयतामिति जलमुत्सृ
जेत् । अनादिमध्यनिधनत्रैलोक्यपरिरक्षक ॥ इमां शमीं गृहाण त्वं विवाहविधिनेश्वर ॥ १ ॥ इति
प्रार्थयेत् । ततो दानप्रतिष्ठासिद्धये हिरण्यदक्षिणां समर्प्य नीराजयित्वा शांतिसूक्तानि पठेत् । ततोऽग्नेः
परिस्तरणादि कृत्वा अघारादिद्वादशाहुतीर्हुत्वा द्वादशाक्षरेण वा अष्टाक्षरेण अष्टोत्तरशत
माज्याहुतीर्दत्त्वा पूर्णाहुतिपर्यंतकर्म समाप्य आचार्यादिभ्यो दक्षिणां दत्त्वा ब्राह्मणान् भोजयेत् ॥
अन्यत्सर्वं तुळसीविवाहवज्ज्ञेयम् । अस्य फलमुक्तं सनत्कुमारसंहितायाम् । धात्र्यश्वत्थौ य एकत्र

पालयित्वा समुद्वहेत् । न नश्यते तस्य पुण्यं कल्पकोटिशतैरपि ॥ इत्यश्वत्थविवाहः ॥ अथालं
कारः ॥ देशे विशाले हि मरौ बभूव वीकोजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी
लोके विकानेर इति प्रसिद्धा ॥ १ ॥ तत्रान्तरे देवपुरोपमे पुरे श्रीरत्नदुर्गे नृपदुर्गमे शुभे ॥
विद्यासदाचारयुतैश्च सद्द्विजैर्वैश्यैर्धनाढ्यैर्बहुभिश्च मण्डिते ॥ २ ॥ आसीद्वसिष्ठान्वयगौडविप्रो
माध्यंदिनीयो बुधजीवराजः ॥ विवृद्धमानो विदुषां समाजे सुज्ञैर्नरैः सर्वसमृद्धिभाक् सः ॥ ३ ॥
तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदविद्याध्ययने च नैपुणाः ॥ आयातयातद्विजशुद्धशा
ङ्कणा वीर्येण संताडितवैरिदुर्गणाः ॥ ४ ॥ एतेषु मुख्यः किल रामकृष्णो ज्ञानेन स्वल्पीकृतसर्व
तृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेवकृष्णः ॥ ५ ॥ तस्याभवन्नाममिताः ३
सुपुत्राः स्वधर्मरक्ताः सुकलत्रमित्राः ॥ गृहेषु संलिखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ६ ॥
इमानि नामानि भवंति तेषां चतुर्भुजाख्यो विबुधोऽग्रजातः ॥ कस्तूरिचन्द्राभिधसज्जनोऽन्योऽपरो
गुणी ज्येष्ठमुखस्तु रामः ॥ ७ ॥ तत्रापि मध्या निजवंशपालकाः कस्तूरिचन्द्राख्यमहत्सु
सत्कृताः ॥ तेषां सुपुत्रावनवद्यमन्दितावास्तां किल द्वौ नितरां धरातले ॥ ८ ॥ चातुर्थिलालाख्य

गुरूमुखाख्यौ सुज्ञौ गुणाढ्यौ निजधर्मरक्तौ ॥ ज्येष्ठस्तयोर्वै खलु पण्डिताग्र्यः श्रीशंभुपादाब्ज
विलग्नचित्तः ॥ ९ ॥ षट्शास्त्रवेत्ता निजधर्मतत्परः परोपकारी च निबंधकर्ता ॥ दाता मनस्वी द्विज
देवभक्तो हुताऽवशिष्टान्नसदानुरक्तः ॥ १० ॥ यत्प्रसूर्हरबाईति पिता कस्तूरिचन्द्रकः ॥ माताहश्च
श्रीरामः कृष्णात्रेयकुलोद्भवः ॥ ११ ॥ सूत्रं कात्यायनं यस्य शाखा वाजसनेयिका । श्रीवसिष्ठकुलं
सोऽयं चतुर्थीलाल पंडितः ॥ १२ ॥ एतादृशेनाऽत्र महात्मना वै विलुप्तप्राचीननिबंधकर्त्रा ॥
द्विषण्णिबंधा १२ रचिता अनेन शिवस्य सांबस्य वरप्रसादात् ॥ १३ ॥ तत्रायमष्टमो ग्रंथः पूर्णताम
गमच्छुभः ॥ अनेन प्रीयतां शंभुर्भवान्या सह सर्वदा ॥ १४ ॥ इति श्रीमन्महाराजाधिराजक्षत्रि
यकुलार्कमरुदेशान्तर्गत श्रीवीकानेराधिपतिश्रीगंगासिंहवर्मणां समाज्ञया श्रीरत्नगढनिवासिना
गौडवंशोद्भवनानानिबंधकर्त्रा पण्डितश्रीचतुर्थीलालशर्मणा विरचिते श्रीचातुर्थीलालभास्करे
महानिबंधे व्रतोद्यापनप्रकाशनामाष्टमोयं ग्रंथ समाप्तः ॥ ८ ॥ श्रीशंकरार्पणमस्तु ॥ ॥ ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास-श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वी गल्ली खम्बाटालैन ) स्वकीये " श्रीवेङ्कटेश्वर "
( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ॥ संवत् २०४३ सन् १९८६

प्र० ॥१५४

॥ अथ सर्वव्रतोद्यापनकर्मोपयोगिसामग्री लिख्यते ॥ कुंकुमकेशरचंदनानि। पुष्पाणि विचित्राणि। पुष्पमाला। तुलसीपत्राणि। बिल्वपत्राणि। वस्त्राणि नानाप्रकाराणि। पीतकौशेयवस्त्रम्। पंचरंगाः। धूपः। दीपः। नैवेद्यं मोदकपायसकृसरान्नमाषभक्तपूरिकापूपादि। नारिकेलफलानि। ऋतुफलानि। तांबूलानि। पूगीफलानि। एलाः। लवंगानि। यज्ञोपवीतानि स्वहस्तकृतानि। आचार्यादिवरणोपकरणानि स्वर्णमुद्रिकासन-कमंडलुपंचवस्त्रप्रभृतीनि। (ग्रहमखकरणे) नवग्रहसमिधः अर्क १ पलाश २ खदिरा ३ पामार्ग ४ पिप्पलो ५ दुंबर ६ शमी ७ दूर्वा ८ कुशाः ९, ताः सर्वाः प्रादेशमात्राः शाकल्यार्थम् तिला द्विभागाः। यवा एकभागाः। तंडुला अर्धभागाः। गव्यं घृतम्। शर्करा। गुग्गुलुः। सुगंधिद्रव्याणि। वातादा (बादामा)दिस्निग्धफलानि। स्रुक्स्रुवप्रणीताप्रोक्षणीपात्राणि। पूर्णपात्रम्। ग्रहबल्यर्थं गुडौदनादि लोकपालाद्यर्थं माषभक्तादि। अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधसंभवाः पंचपल्लवाः। मुरा–मांसी–वचा कुष्ठ–शैलेय–हरिद्राद्वय-कर्चूर-चंपक-मुरता इति सर्वौषध्यः। अश्वस्थानात् १ गजस्थानात् २ वल्मीकात् ३ नदीसागरसंगमात् ४ शुष्कह्रदात् ५ राजद्वारात् ६ गोकुलात् ७ इति सप्तमृदः। दुग्ध-दधि घृत-मधु-शर्करा इति पंचामृतानि। गोमूत्र–गोमय–गोघृत-गोदुग्ध गोदधीनि इति पंचगव्यानि। श्वेतसर्षपः। लाजाः। ताम्रकलशः १ ताम्रपात्रम् १ मृन्मयकलशः १ प्रधानदेवप्रतिमा सुवर्णमयी १ (सुवर्णटिकडी) कौसुंभवस्त्रम्। कौसुंभसूत्रम्। कर्पूरः। सिंदूरम्। रक्तचंदनम्। गुडः। गंगोदकम्। गंगामृत्तिका। तीर्थमृत्तिका। गोरोचनम्। कस्तूरिका। तिलतैलम्। हरिद्राचूर्णम्। सौभाग्यद्रव्यसहिता पेटिका। वायनद्रव्याणि। मुद्गाः। माषाः। कार्पासवर्तिकाः। श्वेतरक्तपीतकृष्णवस्त्राणि। कदलीस्तंभाः ४। कांस्यकटोरिका। कांस्यमयी स्थाली। छायापात्रम्। पत्रावली। आसनानि। गुलालम्। द्राक्षा। आमलकफलानि। होमार्थं समिधः। सवत्सा सोपस्करा धेनुः १ सोपस्करा शय्या १ मृन्मयशरावाणि। जलपूरितमृन्मयघटाः सवस्त्राः। व्यंजनानि। आचार्यदक्षिणा। ऋत्विग्दक्षिणा। ब्राह्मणभोजनम्। भूयसी दक्षिणा। अन्यदपि देशाचारोपयोग्युपकरणानि ज्ञेयानि। इति सामग्री।

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५,

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८

॥ इति व्रतोद्यापनप्रकाशसमाप्तिः ॥

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस.
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८.

KHEMRAJ SHRIKRISHNADASS

